TRIVANDRUM SANSKRIT SERIES.

No. XL.

THE

# ALANKÂRASÛTRA

OF

## RÂJÂNAKA SRÎ RUYYAKA

WITH

THE VRITTI, ALANKÂRASARVASVA OF SRÎ MANKHUKA

AND

COMMENTARY BY SAMUDRABANDHA

ON THE LATTER

EDITED BY


K. SÂMBASIVA SÂSTRÎ,

*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum*



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE

---

Second Edition

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४०.

राजानकश्रीरुय्यकप्रणीतम्

# अलङ्कारसूत्रं

श्रीमज्जयरथप्रणीतया

अलङ्कारसर्वस्वाख्यया वृत्त्या

समुद्रबन्धकृतव्याख्यासनाथया समेतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

द्वितीयं संस्करणम् ।

---

तच्च

अनन्तशयने

महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोल्लम्बाब्दाः ११०१, क्रैस्ताब्दाः १९२६.

Ruyyaka is here mentioned as his preceptor (guru)

(2) "गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते ।"

(The first stanza in the present work)

Here the author of the Vrtti says that the meaning of the Alankarasutras of his preceptor is explained in the Vrtti.

(3) "इति मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिक ।
सत्कविमुखालङ्करण तमिममलङ्कारसर्वस्वम् ॥"

(The last stanza of the present work)

Here the author is specifically mentioned as Mankhuka and his work as Alankarasarvasva.

The present commentator Samudrabandha would lead us to an entirely different standpoint altogether. He calls the work that he starts to comment upon, Alankarasarvasva and its author Mankhuka. He also states that this work on poetics is 'originated' by Mankhuka. Thus —

(1) "कदाचिन्मङ्खुकोपज्ञ काव्यालङ्कारलक्षणम् ।
प्रदर्श्य रविवर्माणं प्रार्थयन्त विपश्चित ॥"

(2) "गम्भीर नस्तितीर्षूणां मङ्खुकग्रन्थसागरम् ।"

(3) "बुधपरिषदलङ्कारो व्याख्यन्नलङ्कारसर्वस्वम् ।

He indeed comments on the passage,

'गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते ।'

and explains it गुर्वित्यनेन विवक्षितस्य तात्पर्यस्यावश्यवक्तव्यता दर्शयति ।
He would appear not to find any reference to a preceptor in the first work but rather to take it as meaning 'that which deserves explanation'

Proceeding to comment on Alankarasarvasva, he occasionally gives explanations of the Sutra portion as well, and makes it apparent, that he includes both Sutra and Vrtti in his conception of Alankarasarvasva. Thus —

(1) "विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्ति (सू–३१) विशेषण साम्यादित्यादि । अप्रस्तुतस्य गम्यत्व इत्यनेन सारूप्यनिमित्त मप्रस्तुतप्रशसाभेद व्यवच्छिनत्ति ।"

(2) 'विरुद्धाभासत्व विरोध (सू–४०) विरुद्धाभासत्वमिति । अविरुद्धत्वेऽपि विरुद्धवदाभासमानो विरुद्धाभास । तस्य भावस्तत्त्वम् ।"

Besides, where the Vrtti explains the word 'Samkshepatah' in the Sutra,

'एवमेते शब्दार्थोभयालङ्कारा संक्षेपतः सूत्रिता" (सू–८६), Samudrabandha says:—

'स्वकण्ठेनानुक्तिशङ्कानिरासाय सूत्रस्थस्य संक्षेपत इति पदस्यान्वयप्रदर्शनमुखेन व्याचष्टे'

i. e., explains in his own words and thus clearly shows that he considers the author of the Vṛtti as identical with the author of the Sūtra.

Reference should also be made to the following:—

(1) 'उदाहरणं मङ्खीये श्रीकण्ठस्तवे' (P. 15) For example refer to Mankhuka's Srīkanthastava.

(2) 'यथा मदीये श्रीकण्ठस्तवे' (P.–18) As in my Srīkantha-stava.

Here Mankhīya may be a mistake for madīya, or as is not at all improbable, the author may have referred to his work in the 3rd person in one place and in the 1st person in another.

Under the circumstances we would defer pronouncing a conclusive opinion on the authorship of the present work until we are in possession of some at least of the many works of Śrī Ruyyaka referred to in Srīkanthacharita.

'यत्कृतिष्वेकधानेन मूर्धा कस्य न वीप्सया।
सारस्वतरसावर्तवलनेनेव चेष्टते॥
तं श्रीरुय्यकमालोक्य' (Sarga 25, Stanza, 29)

and of those of Mankhuka mentioned in the preface to the first edition of this work.

It is not proposed here to deal with the date of the author or authors as the case may be, of the present work and other details, as these have been well discussed by the learned editor (No. 40 T. S. S.)

From the treatment herein adopted as the result of discussing the views of all well known Alankārikas, the work should be welcome to all lovers of Sanskrit literature. The high estimation in which this Alankārasūtra has been held by scholars is shown by the recognition it has received at the hands of Sahityachakravartikoluhtya Bhattagōpāla who quotes its views as decisive in several places in his commentary on Kāvyaprakāsa called Sāhityachudāmaṇi. Thus—

(1) "यत् सूत्रम्–उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्व उपमा ।"
सू-११. पृ-२२.

(2) "यच्च सूत्रं– विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः ।"
सू-३१. पृ-९१.

An index for quotations has been added in thus edition.

Trivandrum,
28th Karkatakam 1101.

K. SĀMBASIVA SĀSTRĪ.

॥ श्री ॥

# निवेदना ।

द्वितीयमिदं संस्करणं राजानकश्रीरुय्यककृतेरलङ्कारसूत्रस्य, यत् समुद्रबन्धव्याख्यानेन सनाथया श्रीमङ्खुकप्रणीतया अलङ्कारसर्वस्वाख्यया वृत्त्योपबृंहितमितः कार्यालयाद् अनन्तशयनसंस्कृतग्रन्थावल्याश्चत्वारिंशो ग्रन्थः प्राक् प्राकाश्यत ।

अलङ्कारसूत्रं नाम सुप्रसिद्धमेकं वामनाचार्यस्य काव्यालङ्कारसूत्रम्, अन्यच्च केशवमिश्रीयस्यालङ्कारशेखरस्य मूलभूतं शौद्धोदनिमुनिविरचितं कारिकात्मकम् अलङ्कारविद्यासूत्रम्,* इदं तु प्रस्तुतं श्रीरुय्यकीयं तृतीयम्। *अस्य चैव प्रकाशनेन निखिलसाहित्यज्ञसुचिरपरिचितः कश्चिदनभिनवो वृत्तान्त* सुदूरमपसृत, य श्रीविद्याचक्रवर्तिदिशा[१] सूत्रवृत्त्युभयात्मिका अलङ्कारसर्वस्वाभिधाना कृति श्रीरुय्यकस्यैवेति, सूत्रवृत्तिभेद एव तत्र नास्तीत्यपि च। तथाहि — श्रीकण्ठचरितमहाकाव्यस्य पञ्चविंशे सर्गे,

*"त श्रीरुय्यकमालोक्य स प्रियं गुरुमग्रहीत् ।*
सौहार्दप्रश्रयरसस्रोत सम्भेदमज्जनम् ॥" (श्लो० ३०).

इति रुय्यकमात्मनो गुरु कथयता, प्रस्तुतग्रन्थस्य मुखे "गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते" इति गुरो रुय्यकस्य अलङ्कारसूत्राणां वृत्त्या (अनवगतपदार्थविवरणेन) तात्पर्यवचनं प्रतिजानानेन, ग्रन्थान्ते

"इति मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिक ।
सुकविमुखालङ्कार तदिदमलङ्कारसर्वस्वम् ॥"

---

* मम्मटभट्टविरचितकाव्यप्रकाशस्थानामलङ्कारकारिकाणां सूत्रत्वेन व्यवहारस्तु केवलमालङ्कारिकनिकायप्रसिद्ध ।

१ श्रीविद्याचक्रवर्तिना किल स्वकृताया सर्वस्वसञ्जीविन्याख्याया व्याख्याया आदौ

"रुचकाचार्योपज्ञे सेयमलङ्कारसर्वस्वे ।
सञ्जीवनीति टीका श्रीविद्याचक्रवर्तिना क्रियते ॥'

इति अन्ते

'इत्थं भूम्ना रुचकवचसा विस्तरे कर्कशोऽस्य
टीकास्माभि समुपरचिता तेन सञ्जीवनीयम् ।"

इति चालङ्कारसर्वस्वं रुचककृतमङ्गीक्रियते । रुचकशब्दोऽयं रुय्यकस्य देशीयशब्दस्य प्रकृतिरिति स्वीकारे 'कृतिरनवद्राजानकरुय्यकस्ये'ति काव्यमालाप्रकाशितपुस्तकादेतेन वर्त्मना रुय्यक एवालङ्कारसर्वस्वकर्तेति प्रतिपादितप्रायम् ।

इति ग्रन्थकर्तृनामधेये व्यपदिश्योपसंहरता च श्रीमङ्खुकेनैव स्वगुरू रुय्यकः तद्ग्रन्थोऽलङ्कारसूत्रव्यपदेश्यः, स्वकृतिश्च तद्वृत्तिरलङ्कारसर्वस्वाभिधेयेत्ययमर्थः प्रत्यायितः ।

व्याख्यातुः समुद्रबन्धस्य दिशा तु काचिदियं पर्यालोचना स्थानं लभते । स हि स्वव्याचिख्यासितं ग्रन्थमलङ्कारसर्वस्वाभिधं तत्कर्तारं च मङ्खुकाख्यं कथयति । इदमलङ्कारलक्षणं मङ्खुकोपज्ञमाह च । यथा—

"कदाचिन्मङ्खुकोपज्ञं काव्यालङ्कारलक्षणम् ।
प्रदर्श्य रविवर्माणं प्रार्थयन्त विपश्चितः ॥
गम्भीरं नस्तितीर्षूणां मङ्खुकग्रन्थसागरम् ।"
"बुधपरिषदलङ्कारो व्याख्यदलङ्कारसर्वस्वम् ।"

इति ।

अथ च स एव गुर्वलङ्कारसूत्राणामिति पाठमभ्युपयन्नपि गुरुपदमाचार्यपरं न स्पष्टमाचष्टे । "गुर्वित्यनेन विवक्षितस्य तात्पर्यस्यावश्यवक्तव्यतां दर्शयती"ति व्यङ्ग्यार्थमेव विशदयति । स्वव्याख्येयमलङ्कारसर्वस्वं प्रतिज्ञाय सूत्रगतमप्यंशं क्वचित् क्वचित् प्रतीकमुपादाय व्याचक्षाणः सूत्रवृत्ती उभे अपि अलङ्कारसर्वस्वनामन्यन्तर्भावयति च । यथा—

१. 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः॥ (सू० ३१). विशेषणसाम्यादित्यादि । अप्रस्तुतस्य गम्यत्व इत्यनेन सारूप्यनिमित्तमप्रस्तुतप्रशंसाभेदं व्यवच्छिनत्ति ।'

२. 'विरुद्धाभासत्वं विरोधः ॥ (सू० ४०). विरुद्धाभासत्वमिति । अविरुद्धत्वेऽपि विरुद्धवदवभासमानो विरुद्धाभासः, तस्य भावस्तत्त्वम् ।'

इति । किञ्च 'एवमेते शब्दार्थोभयालङ्काराः संक्षेपतः सूत्रिताः' (सू० ८६) इत्युपसंहारसूत्रघटकं संक्षेपत इति पदं विवृण्वतीं वृत्तिं 'स्वकण्ठेनानुक्तिशङ्कानिरासाय सूत्रस्थस्य संक्षेपत इति पदस्यान्वयप्रदर्शनमुखेन व्याचष्टे' इत्यवतारयन् सूत्रवृत्त्योरेककर्तृकत्वमभिमन्यते । तदियता तन्मते अलङ्कारसर्वस्वं नाम सूत्रवृत्त्युभयात्मकं तत्कर्ता च श्रीमङ्खुक इति ।

पुनरुक्तवदाभासोदाहरणे (१५. पृष्ठे) 'उदाहरणं मङ्खीये श्रीकण्ठस्तवे' इति तु अनुप्रासोदाहरणे (१८. पृष्ठे) 'यथा मदीये श्रीकण्ठस्तवे'

इत्यस्यापभ्रंशो वा स्यात् उताहो ग्रन्थकर्तुः स्वनामग्रहणपुरःसरमप्युदाहरणप्रदर्शनं नासम्भवीत्यत्र द्योतकं वा भवेत्।

अत्र तु पार्यन्तिको निश्चयः —

श्रीकण्ठचरितकाव्ये पञ्चविंशे सर्गे

"यत्कृतिष्ववधानेन मूर्धा कस्य न धीष्मया।
सारस्वतरसावर्तवलनेनेव चेष्टते ॥
तं श्रीरुय्यकं ।
मज्जनम् ॥"

इति मङ्खुकोक्तप्रकारेण रुय्यकप्रणीतानामितरासां कृतीनां प्रथमसंस्करणोपोद्घातोक्तरीत्या मङ्खीयानां साहित्यमीमांसानाटकमीमांसादीनां च ग्रन्थानामुपलब्धौ तद्विमर्शमुखप्रेक्षी प्रतीक्षितव्य इति मे मतिः।

ग्रन्थकर्तुर्जीवितसमयादिकं तु पूर्वोपोद्घात एव यथावन्निरूपितं नेह वितायते।

इदमीयमलङ्कारस्वरूपनिरूपणमखिलान्यालङ्कारिकाचार्यमतप्रक्रियापरिचिन्तनफलायितमास्वादमात्रावशेषं सहृदयानामत्यर्थमभिनन्दनीयम्।

इयती पुनरस्य प्रतिष्ठा अलङ्कारसूत्रस्य यत् साहित्यचक्रवर्तिलौहित्यभट्टगोपालकविरचितायां काव्यप्रकाशविमर्शिन्यां साहित्यचूडामणावलङ्कारप्रकरणे प्रायः सर्वतः प्रमाणमिदमुद्घोष्यते। यथा —

१. उपमायाम् — यत् सूत्रम् "उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा।" (सू० ११)

२. समासोक्तौ — यच्च सूत्रं "विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः" (सू० २९) इत्यादि।

अस्मिंश्च द्वितीये संस्करणे प्रथमसंस्करणेऽदृष्टा काप्युद्धरणानुक्रमणी सौकर्यकृते संयोजिता॥

अनन्तशयनम्,
११०१–१२–२८।

के. साम्बशिवशास्त्री.

# INTRODUCTION

The present edition of this work comprises (1) Alankarasūtra, (2) a Vritti (commentary on the Sūtra) and (3) a commentary on the Vritti The Vritti published in the Kavyamala Series has the following introductory line, "निजालङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते' From this it has to be inferred that both the Sutra and the Vritti were written by one and the same author And from the closing line therein, "सम्पूर्णमिदम् अलङ्कारसर्वस्वम् both the Sūtra and Vritti have come to be known as Alankarasarvasva The colophon in the same edition, 'कृतिरत्रभवद्राजानकरुय्यकस्य' ascribes the authorship to Ruyyaka

But in our ancient palm leaf manuscripts of the work, the above introductory line runs "गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते , where the reading गुरु instead of निज gives rise to the surmise that the author of the Sūtra might be a preceptor of the author of the Vritti And the couplet at the end of our manuscripts,

'इति *मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिक ।
सुकविमुखालङ्कार तदिदमलङ्कारसर्वस्वम् ॥'

makes it clear that the author of Alankarasarvasva was Mankhuka The commentator Samudrabandha calls the Vritti the subject of his commentary, as Alankārasarvasva and its author, as Mankhuka, and adopts the reading गुरु in "गुर्वलङ्कारसूत्राणाम् '

Thus it is evident that a belief in the authorship of Alankarasarvasva had long ago been current in two ways This belief could not have arisen unless both Ruyyaka and Mankhuka had some connection with the work Hence it may be argued that one of them should have written the Sūtra, and the other, the Vritti Of these the author of the Sūtra, being the preceptor of the author of the Vritti as shown by the reading गुर्वलङ्कारसूत्राणाम् should be *Ruyyaka* himself, and the author of the Vritti should be Mankhuka For, Mankhuka in his Srikanthacharita refers to Ruyyaka as his preceptor thus —

"त श्रीरुय्यकमालोक्य स प्रिय गुरुमग्रहीत् ।
सौहार्दप्रश्रयरसस्रोतस्सम्भेदमज्जनम् ॥' (25-30)

---

* Here the proper name should be मङ्खक which probably has become corrupted as मङ्खुक just as the name अप्पय is pronounced as अप्पय्य with double य

The *author of Alankarasarvasva has been described in the introduction of Vyaktiviveka as a writer of many treatises such as साहित्यमीमांसा, नाटकमीमांसा etc., and as a critic of Mahimabhatta the author of Vyaktiviveka. He flourished in the first half of the 12th century A. D.

It is well known that in the elucidation of Arthālankāras, Alankārasarvasva surpasses the Kavyaprakāśa of Mammata and also criticises some of the views of the latter. The commentary, which is now published is well suited to the dignified nature of Alankarasarvasva and is superior, in every respect to Jayaratha's commentary published in the Kavyamala Series. Samudrabandha the author of the commentary adorned the court of Ravi Varma Bhupa *alias* Sangramadhīra, the king of Kolamba (Quilon) in Travancore. It was observed in the introduction of Pradyumnabhyudaya (Trivandrum Sanskrit Series No. 8) that this king, who was born in 1265 A. D. and conquered the countries as far as Conjeevaram might probably be an ancestor of His Highness the Maharaja of Travancore and that the commentator, Samudrabandha might be the father be of Simharaja who wrote the Prākrita-Rūpavatara.

The edition is based on the following palm leaf manuscripts written in Malayalam character:—

| | | |
|---|---|---|
| क and ख, Alankarasarvasva | | belonging to the Palace Library, *about 4 centuries old* |
| ग | Do | lent by Mr. Kailasapuram Govinda Pisharodi about 4 centuries old |
| क the commentary of Alankarasarvasva, | | belonging to the Palace Library *3 centuries old* |
| ख | Do | lent by Mr. Kailasapuram Govinda Pisharodi 3 centuries old |
| ग | Do | lent by Mr. Chakram Krishna Variyar about a century old |

TRIVANDRUM,

T. GAṆAPATI SÂSTRÎ

* It was stated in the introduction of Vyaktiviveka that Alankarasarvasva was written by Ruyyaka. It is now what has been taken to have been written by Mankhuka.

# उपोद्घातः ।

अलङ्कारसूत्रं, तस्य वृत्तिः, वृत्तेर्व्याख्यानमित्येतत्त्रितयमस्मिन् पुस्तके निवेशितम् । तत्र काव्यमालाप्रकाशितपुस्तके

"निजालङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते"

इति चिकीर्षितप्रतिज्ञावाक्ये दृष्टस्य निजशब्दपाठस्यानुसारात् सूत्रवृत्त्योरेक-प्रणेतेति, तत्र 'सम्पूर्णमिदम् अलङ्कारसर्वस्वम्' इति सामान्येन कथनात् सूत्रवृत्त्योः समुदायः अलङ्कारसर्वस्वम् इति च प्रसिद्धिः । तत्पुस्तकान्ते 'कृतिस्तत्रभवद्राजानकरुय्यकस्य' इति पाठाद् अलङ्कारसर्वस्वस्य प्रणेता रुय्यकः प्रतीतः ।

किन्तु अतिस्थविरेष्वस्मदीयादर्शग्रन्थेषु चिकीर्षितप्रतिज्ञावाक्ये

"गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते"

इति निजशब्दस्थाने गुरुशब्दपाठस्यैव दर्शनाद् वृत्तिकारस्य गुरुः सूत्रकार इति गम्यते । ग्रन्थान्ते च

"इति *मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः ।
सुकविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम् ॥"

इत्यार्यया पठितया मङ्खुकोऽलङ्कारसर्वस्वस्य कर्ता प्रख्यायते । †व्याख्याता च समुद्रबन्धः स्वव्याख्याविषयभूतं वृत्तिग्रन्थम् अलङ्कारसर्वस्वं व्यपदिशति, मङ्खुकप्रणीतमाचष्टे, गुरुशब्दपाठमेव चोपादत्ते ।

तदेवम् अलङ्कारसर्वस्वं प्रति कर्तृप्रयोगमयथा प्रवृत्तेत्यवगम्यते । सोऽयं रुय्यकमङ्खुकयोरलङ्कारसर्वस्वकर्तृत्वव्यवहारः विना ग्रन्थसम्बन्धं

---

* मङ्खक इति न्याय्ये शब्दरूपे मङ्खुक इत्युत्तरो व्यवहारस्तदादुपजातो नूनम् अस्मदादिग्रन्थेषु यथार्थव्यादिवदिति मङ्खक एवेह मङ्खुको व्यपदिष्टो वेदितव्यः । † १, २ पृष्ठे द्रष्टव्ये ।

न सम्भवतीति तयोरेकः सूत्रस्य कर्ता, अन्यो वृत्तेरित्यवश्यमङ्गीकर्तव्यम् । तत्र यः सूत्रकारः स 'गुर्वलङ्कारसूत्राणाम्' इत्युक्तवृत्तिपाठानुसारेण वृत्तिकारस्य गुरुर्भवन् रुय्यक एव भवितुमर्हति; रुय्यकं हि मङ्खुकः श्रीकण्ठचरितस्य पञ्चविंशे सर्गे गुरुमात्मन आह—

"तं श्रीरुय्यकमालोक्य स प्रियं गुरुमग्रहीत् ।
सौहार्दप्रश्रयरसस्रोतस्सम्भेदमज्जनम् ॥" (२५. ३०)

इति ।

*अलङ्कारसर्वस्वकारोऽयं क्रैस्ताब्दीयद्वादशशतकपूर्वार्धस्थितः साहित्यमीमांसा—नाटकमीमांसादिबहुग्रन्थकर्ता व्यक्तिविवेककारशिक्षकश्चेति व्यक्तिविवेकोपोद्घातेऽवोचाम ।

इदम् अलङ्कारसर्वस्वम् अर्थालङ्कारव्युत्पादने काव्यप्रकाशाद् गुणवत्तरं क्वचित् क्वचित् तस्य शिक्षकं चेति विदुरेव कोविदाः । एतेन सह यदत्र संक्षेपितं व्याख्यानं, तदेतस्य मौढतायाः सर्वाकारानुरूपं जयरथव्याख्यानाद् बहुगुणं च । व्याख्यानस्य प्रणेता तत्रभवान् समुद्रबन्धः काञ्चीपुराधधिकदेशविजयिनः कोळम्बाधिपतेर्वञ्चिमण्डलमहाराजपूर्वपुरुषस्य १२६५ तमक्रैस्ताब्दजीविनः सङ्ग्रामधीरापरनामधेयस्य श्रीरविवर्ममहीपालस्य सभाया आभरणमासीत्; अयं प्राकृतरूपावतारकर्तुः सिंहराजस्य पिता सम्भाव्यते इत्यादि प्रद्युम्नाभ्युदयस्य (अनन्तशयनसंस्कृतग्रन्थावल्यष्टमाङ्कस्य) उपोद्घाते प्रपञ्चितमस्माभिः ।

एतत्पुस्तकसंशोधनाधारभूता आदर्शग्रन्था स्तावदेते—

| | | | |
|---|---|---|---|
| क. | अलङ्कारसर्वस्वं | राजकीयग्रन्थशालीयं, | चतुश्शतवर्षवृद्धदेश्यम् । |
| ख. | तथा | तथा | तथा । |
| ग. | तथा | कैलासपुरगोविन्दपिषारोटिसम्बन्धि | तथा । |

* अयमिदानीं मङ्खुको बोद्धव्यः, यो व्यक्तिविवेकोपोद्घाते रुय्यकः कथितः ।

क. अलङ्कारसर्वस्वव्याख्या राजकीयग्रन्थशालीया, त्रिशतवर्षवृद्धा ।

ख. तथा कैलासपुरगोविन्दपिषारोटिसम्बन्धिनी तथा ।

ग. तथा चुनक्करकृष्णवार्यसम्बन्धिनी उपशतवर्षवृद्धा ।

सर्वे एते तालपत्रात्मकाः केरलीयग्रन्थलिपयश्च ।

अनन्तशयनम्. त. गणपतिशास्त्री.

## विषयानुक्रमः ।

॥ श्रीः ॥

# अलङ्कारसूत्रं

## श्रीमङ्खुकप्रणीतया

## अलङ्कारसर्वस्वाख्यया वृत्त्या

### समुद्रबन्धविरचितव्याख्यासनाथया समेतम् ।

---

नमस्कृत्य परां वाचं देवीं त्रिविधविग्रहाम् ।
गुर्वलङ्कारसूत्राणां वृत्त्या तात्पर्यमुच्यते ॥

---

प्रपन्नमानसाम्भोजप्रबोधनपरः क्रियात् ।
विघ्नान्धकारविध्वंसं विनायकविभाकरः ॥

केरलेष्वस्ति नगरी कोलम्ब इति विश्रुता ।
अधिश्रिया ययावाची हरिदप्यलकावती ॥

अयोध्यामपि यां सन्तो राघवान्वयवर्जिताम् ।
अगोचरं भुजङ्गानामाहुर्भोगवतीमपि ॥

प्राप्तकल्पद्रुमच्छायैः सुमनोभिः कृतास्पदा ।
अवतीर्णेव मेदिन्यां या चकास्त्यमरावती ॥

विभूषयन् पुरीमेनां यदुवंशविभूषणम् ।
रविवर्मेति विख्यातो राजा शास्ति वसुन्धराम् ॥

यस्मादन्यैः पदं नास्ति कलावद्राजशब्दयोः ।
तदन्ववायकूटस्थमन्तरेण निशाकरम् ॥

विवर्णारिवधूवक्त्रव्याख्यातभुजविक्रमे ।
पत्यौ यस्मिन्नभूदुर्वी वीरपत्नीपदास्पदम् ॥

---

१. 'निजाल' क. ख. पाठ  २. 'कृना दिगन्त' ग पाठः.  ३ 'प', ४. 'न्यास्पदं' ख. पाठः.

G. P. T. 1691. 500 3 6 100 L

वीरेण वाग्मिना येन वदान्येन वसुन्धरा ।
वासवं वचसामीशं पारिजातं च लम्भिता ॥
न परं धन्वना शून्याः पाणयः पृथिवीभुजाम् ।
अपि कृत्स्ना मही यस्मिन्नवत्यतुलविक्रमे ॥
विद्यास्थानैः समं तस्य विप्रानि चतुर्दश ।
प्रसाधितवतः पार्श्वे सुधियो जातु नात्यजन् ॥
कदाचिन्मङ्खुकोपज्ञं काव्यालङ्कारलक्षणम् ।
प्रदर्श्य रविवर्माणं प्रार्थयन्त विपश्चितः ॥
गम्भीरं नस्तितीर्षूणां मङ्खुकग्रन्थसागरम् ।
नौरस्तु भवतः प्रज्ञा स्थेयसी यदुनन्दन ! ॥
व्याचक्ष्व तमिमं ग्रन्थं व्यावृत्तवचनक्रमः ।
शास्त्रसाहित्यपाथोधिपारावारीणया धिया ॥
इति तैः प्रार्थितः प्राज्ञैः पार्थिवस्तानभाषत ।
दन्तार्चिरुद्गमव्याजव्यक्तवैशद्यया गिरा ॥
मयासाध्यममीष्टं[1] वो ग्रन्थः पुनरयं महान् ।
व्याख्यातुं शक्यमासाद्य भवतां यद्यनुग्रहम् ॥
व्याख्येयं माननीया स्यात् सद्भिराद्रियते यदि ।
शम्भोः परिग्रहादेव श्लाघ्या चान्द्रमसी कला ॥
इत्युक्त्वैष मनीषावैभवपरिभूतवासवाचार्यः ।
बुधपरिषदलङ्कारो व्याख्यदलङ्कारसर्वस्वम् ॥
अवधृत्यै यदुपतिना विवृतस्य गरीयसस्तदर्थस्य ।
कश्चिद् व्यधित विपश्चिच्छन्दनिबन्धं समुद्रबन्धाख्यः ॥

आरिप्सितस्य ग्रन्थस्याविघ्नपरिसमाप्त्यर्थं सदाचारानुमितस्मृतिमूलभूतश्रुत्यवगतया कर्तव्यतया कृतं प्रकृताभिमतदेवतानमस्कारं शिष्यप्रबोधनाय ग्रन्थे निवेशयन् श्रोतृप्रवृत्त्यर्थं विषयसम्बन्धप्रयोजनान्याह— **नमस्कृत्येत्यादिना** । नमस्कृत्येत्यत्र गतिसमासत्वाल्ल्यबादेशः । 'नम-

१. 'ष्टि', २ 'प्रा' ग पाठः

इह हि[1] तावद् भामहोद्भटप्रभृतयश्चि[2]रन्तनालङ्कारकाराः प्रतीयमानमर्थं वा[3]च्योपस्कारितयालङ्कारपक्षनिक्षिप्तं

---

स्फुरसोर्गत्योः' (८. ३. ४०) इति सकारः । परां सूक्ष्माम् । सा हि शब्दब्रह्मणश्चतसृष्ववस्थास्वनाद्यविद्यावासनोपप्लवमानशब्दार्थावबोधरहितपरब्रह्मशब्दवाच्या । तदुक्तं —"स्वरूपं ज्योतिरेवान्तः सूक्ष्मा वागनपायिनी" इति । विग्रहशब्देन पश्यन्त्यादयस्तिस्रोऽवस्था अवच्छेदकत्वसाधर्म्यादुपचारादुच्यन्ते । तासां च स्वरूपमुक्तम् —

"अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।
केवलं बुद्ध्युपादाना क्रमरूपानुकारिणी ॥
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ।
स्थानेषु विकृते वायौ कृतवर्णपरिग्रहा ॥
वैखरी वाक् प्रयोक्तृणां प्राणवृत्तिनिबन्धना ।"

इति । गुर्वित्यनेन विवक्षितस्य तात्पर्यस्यावश्यवक्तव्यतां दर्शयति । अलङ्कारसूत्रेत्यनेनालङ्काराणां यथावदवबोधः प्रयोजनं, स चालङ्कारशब्दस्य काव्यगतशोभातिशयहेतुभूतधर्मवाचकतया तादृशधर्मविशिष्टकाव्यनिर्माणज्ञानौपयिकतया यशःप्रभृतिप्रसाधक इत्याह । वृत्त्या अनवगतपदार्थविवरणेन । एवं काव्यगताः पुनरुक्तवदाभासादयोऽलङ्कारा विषयः, तज्ज्ञानं च प्रयोजनं, प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इत्युक्तं भवति । अत्र सूक्ष्माया वाचः पराशब्देनोत्कर्षवाचिना प्रतियोगिविशेषाग्रहणसहकृतेन सर्वप्रतियोगिक उत्कर्षः प्रकाश्यते । तेन च विघ्नोत्सारणसामर्थ्यातिशययोगादस्या एव प्रथमनमस्कार्यत्वमिति देवतान्तरेभ्यो व्यतिरेक इति पूर्वार्धेन वाग्विषयरतिलक्षणं भावं सर्वोत्कर्षलक्षणं वस्तु व्यतिरेकालङ्कारं च दर्शयंस्त्रिविधस्यापि ध्वनेः स्वाभिमतत्वं सूचयित्वालङ्कारसूत्रविवरणं पुनस्तेषामतिगहनार्थतया क्रियत इत्युत्तरार्धेन सूचयति ।

इत्थं सूचितमर्थमिहेत्यादिना प्रकरणेन वितत्य प्रतिपादयति । इह विशिष्टौ शब्दार्थौ काव्यम् । तयोश्च वैशिष्ट्यं धर्ममुखेन व्यापारमुखेन

---

१. 'हि भा', २. 'यस्तावच्चिर' क ख. पाठ ३ 'र' क. पाठः ४. 'धोतय' ख ग पाठः.

रुद्रटेनापि भावालङ्कारो द्विधैवोक्तः । रूपकदीपका-

---

तयाविवक्षितं ग्रहस्तवधात्मने प्रस्तुताय स्वात्मानमर्पयति । आक्षेपे 'बाळअ णाहं दूई' इत्यादौ दूत्याः सत्या दूतीत्वनिषेधो बाधितस्वरूपत्वादविवक्षितो विवक्षितसत्यवादित्वादिकं विशेषं गमयति । व्याजस्तुतौ 'हे हेलाजिते'त्यादौ जलधेरनुपजीव्यतयोद्विग्नेन तत्स्तुतिः क्रियमाणा पूर्ववदेवाविवक्षितत्वाद् विपरीतलक्षणया विवक्षितां निन्दामभिव्यनक्ति । अनन्वये 'युद्धेऽर्जुनोऽर्जुन इवे'त्यादावेकस्यैवोपमानत्वमुपमेयत्वं च विरुद्धत्वादविवक्षितं सदर्जुनादेरुपमानवैधुर्यलक्षणमुत्कर्षं प्रत्याययति । आदिग्रहणाद् विशेषोक्तौ 'आहूतोऽपी'त्यादावाह्वानादिषु सङ्कोचशिथिलीकारहेतुषु समग्रेष्वपि तदनुत्पत्तिरनुपपद्यमानोपपादकतया प्रियतमास्वप्नसमागमादिकारणमाक्षिपति ।

रुद्रटेनाप्यलङ्कारतया प्रतीयमानं वस्तु स्वीकृतमिति दर्शयति—रुद्रटेनेत्यादिना । भावो नाम वास्तवालङ्कारेषु कश्चिद् विशेषः । तस्य च, द्विधा लक्षणं तेन प्रणीतं —

"यस्य विकारः प्रभवन्नप्रतिबन्धेन हेतुना येन ।
गमयति तमभिप्रायं तत्प्रतिबन्धं च भावोऽसौ ॥
अभिधेयमभिदधानं तदेव तदसदृशसकलगुणदोषम् ।
अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भाव ॥"

इति । आद्यस्योदाहरणं —

"ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरा मलिना मुखच्छाया ॥"

अत्र हि तरुण्या मुखच्छायामालिन्यमुत्पद्यमानं स्वनिमित्ततया सङ्केतभ्रंसजनितं विषादलक्षणं वस्त्वाक्षिपति । तच्च स्वप्रतीत्या विना वाच्यस्य विश्रान्त्यभावात् तत्सिद्ध्यङ्गतया वाच्यं प्रति गुणीभवति । यद्वा प्रतीयमानमसुन्दरतयानुरागव्यञ्जकतया सौन्दर्यशालि वाच्यं प्रति गुणीभवति । द्वितीयस्योदाहरणम् —

"एकाकिनी यदबला तरुणी तथाह-
मस्मिन् गृहे गृहपतिश्च गतो विदेशम् ।
कं याचसे त्वमिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥"

पह्नुतितुल्ययोगितादावुपमालङ्कारो वाच्योपस्कारित्वेनोक्तः। रसवत्प्रेयऊर्जस्विप्रभृतौ तु रसभावादिर्वाच्यशोभाहेतुत्वेनोक्तः। उत्प्रेक्षा तु स्वयमेव प्रतीयमाना कथिता। तदित्थं त्रिविधमपि प्रतीयमानमलङ्कारतया प्रख्यापितमेव।

वामनेन तु सादृश्यनिबन्धनाया लक्षणाया वक्रोक्त्यलङ्कारत्वं ब्रुवता कश्चिद् ध्वनिभेदोऽलङ्कारतयैवोक्तः। केवलं गुणविशिष्टपदरचनात्मिका रीतिः काव्यात्मत्वेनोक्ता। उद्भ-

---

अत्र वाच्यो वासनिषेधस्तरुणीलक्षणवक्तृवैशिष्ट्यवशात् प्रधानतया प्रतीयमानाय गृहपतिविदेशगमनादिना निर्यन्त्रणलभ्यरतिसुखवासाभ्यनुज्ञालक्षणाय वस्तुने स्वात्मानमर्पयति। अत्र च स्वमनपेक्ष्यैव विश्रान्तिजुषा स्वं प्रत्युपसर्जनीभवता च वाच्येन व्यञ्जितत्वाद् व्यङ्ग्यं प्रधानम्। **रूपके-त्यादि**। आदिशब्देन परिणामसहोक्त्यादयो गृह्यन्ते। **रसवदित्यादि**। प्रभृतिशब्देन समाहितादयः। **रसभावादिरिति**। आदिशब्देन तदाभासतत्प्रशमादयो गृह्यन्ते। **उत्प्रेक्षा त्विति**। इवादिप्रयोगशून्ये 'महिलासहस्सभरिए' इत्यादौ। स्वयमेव अलङ्कारान्तरनिरपेक्षम्। त्रिविधमपीति वस्त्वलङ्काररसादिलक्षणम्।

**वामनेन त्वित्यादि**। 'सादृश्याल्लक्षणा वक्रोक्तिरि'ति वक्रोक्तिं लक्षयित्वा "उन्मिमील कमलं सरसीनां कैरवं च निमिमील मुहूर्ताद्" इत्युदाहृत्य अत्र नेत्रधर्मावुन्मील(न)निमीलने सादृश्याद् विकाससङ्कोचौ लक्षयत इत्युक्तम्। सादृश्यं च तत्रावयवविश्लेषसंश्लेषलक्षणम्। **कश्चि-दिति**। अविवक्षितवाच्याख्यः। केवलमित्यादिना वामनस्योद्भटादिभिः प्रतीयमानस्यालङ्कारतया कथनादि सर्वं समानम्, इयांस्तु विशेष इति दर्शयति। **काव्यात्मत्वेनेति**। 'रीतिरात्मा काव्यस्य, विशिष्टा पदरचना रीतिः, विशेषो गुणात्मा' इति वदता गुणप्राधान्यमुक्तं भवति। संघटना रचना। अलङ्कारा एवेत्येवकारेण व्यापारादि व्यवच्छिनत्ति। गुणालङ्का-

१. 'रवत्वे', २. 'देवं नि', ३ 'या द्या', क ग पाठ ४. 'ष्ट' स. पाठः.

टादिभिस्तु गुणालङ्काराणां प्रायशः साम्यमेव सूचितम् । विषयमात्रेण भेदप्रतिपादनात् । संघटनाधर्मत्वेन शब्दार्थधर्मत्वेन चेष्टेः । तदेवमलङ्कारा एव काव्ये प्रधानमिति प्राच्यानां मतम् । वक्रोक्तिजीवितकारैस्तु वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधां वक्रोक्तिमेव प्राधान्यात् काव्यजीवमुक्तवान् । व्यापारप्राधान्यं च काव्यस्य प्रतिपेदे ।

अभिधाप्रकारविशेषा एवालङ्काराः । सत्यपि च त्रिविधे प्रतीयमाने व्यापाररूपा भणितिरेव कविसंरम्भगोचरः ।

रयोः शोभाहेतुत्वाविशेषाद् भेदाविवक्षया वामनमप्यन्तर्भाव्य प्राच्यानामित्युक्तम् । वैदग्ध्यभङ्गीत्यादि । तदुक्तम्—

"उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः ।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते ॥"

इति । उभौ शब्दार्थौ । वैदग्ध्यं विदग्धभावः कविकर्मकौशलं, तस्य भङ्गी विच्छित्तिः, तया भणितिः विचित्रैवाभिधा वक्रोक्तिः । अयमर्थः—शब्दार्थौ पृथगवस्थितौ न केनाप्य(व्य ? )तिरिक्तेनालङ्कारेण योज्येते, किन्तु वक्रतया वैचित्र्ययोगितयाभिधानमात्रमेवानयोरलङ्कारः, तस्यैव शोभातिशयकारित्वादिति । व्यापारप्राधान्यमिति । तदुक्तं—

"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ॥"

इति । वक्रकविव्यापारो नाम शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यतिरेकिवर्णविन्यासवदपूर्वार्थप्रत्ययवाक्यप्रकरणप्रबन्धात्मकः षड्विधविषयवक्रताविशिष्टः क्रमः । अभिधेति । तथोक्तं —

"वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा ।
यत्रालङ्कारवर्गोऽयं सर्वोऽप्यन्तर्भविष्यति ॥"

१. 'णा' क ख पाठः. २ 'र. पुनः वै' ग. पाठः. ३. 'वितमु', ४ 'व चाल' ग. पाठः.

उपचारवक्रतादिभिः समस्तो ध्वनिप्रपञ्चः स्वीकृतं[1] एव । केवलमुक्तिवैचित्र्यजीवितं काव्यं, न व्यङ्ग्यार्थ[2]जीवितमिति तदीयं दर्शनं व्यवस्थितम् ।

भट्टनायकेन[3] तु व्यञ्जनव्यापारस्य प्रौढोक्त्याभ्युपगतस्य काव्ये सत्त्वं ब्रुवता न्यग्भावितशब्दार्थस्वरूप[4]स्य व्यापारस्यैव प्राधान्यमुक्तम् । तत्राप्यभिधाभावकत्वलक्षण-

---

इति । उपचारवक्रतादिभिरिति । आदिशब्देन विशेषवक्रतादयः परिगृह्यन्ते । उपचारवक्रत्वं नाम यत्रामूर्तस्य वस्तुनः मूर्तद्रव्याभिधायिना शब्देनाभिधानं 'निकारकणिका', 'हस्तापचेयं यश' इति । कणिकाशब्दो मूर्तवस्तुस्तोकाभिधायी स्तोकत्वसामान्येनोपचारादमूर्तस्यापि निकारस्य स्तोकाभिधानपरत्वेन प्रयुक्तस्तद्विहादकारित्वाद् वक्रतां पुष्णाति । हस्तापचेयमित्यत्र मूर्तपुष्पादिसम्भवि संहतत्वसामान्येनोपचारादमूर्तस्यापि यशसो हस्तापचेयमित्यभिधानं वक्रतामावहति । एतदुभयमपि लक्षणामूलस्य ध्वनेर्विषयः ।

"सस्मार वारणपतिः परिमीलिताक्ष-
मिच्छाविहारवनवासमहोत्सवानाम्"

इत्यत्र परिमीलिताक्षमिति क्रियाविशेषणेन स्मरणसमयभाविसुखानुभवातिशयः प्रतीयते । अत्र पदद्योत्योऽर्थशक्तिमूलो ध्वनिः ।

"अद्यापि मे वरतनोर्मधुराणि तस्या-
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति"

इत्यत्र किमपीति संवृतिवक्रतया तदाकर्णनजनितायाश्चित्तवृत्तेरनुभवैकगोचरत्वलक्षणमव्यपदेश्यत्वं प्रकाश्यते । अत्रापि पूर्ववद् ध्वनिः ।

भट्टनायकेनेत्यादि । प्रौढोक्त्याभ्युपगतस्येति । प्रौढोक्तिरिति संज्ञया निर्दिष्टस्येत्यर्थः । सत्त्वं सद्भावः । तत्रापीत्यादिना व्यापारप्राधान्येऽपि न सर्वेषां शब्दव्यापाराणां प्राधान्यम् । अपि तु कस्यचिदेवेति

---

१. 'तमेव' ख. ग. पाठः. २. 'रन' ग. पाठः. 'थेमि' ग. पाठः. ३. 'न व्या', ४. 'पत्या' क. ग. पाठः. ५. 'स्वरूप' ग. पाठः. ६. 'तायास्तदा' ग. पाठः. ७. 'व्या' ख. पाठः.

व्यापारद्वयोत्तीर्णो रसचर्वणात्मैव भोगापरपर्यायो व्यापारः प्राधान्येन विश्रान्ति[1]स्थानतयाङ्गीकृतः । ध्वनिकारः पुनरभिधालक्षणातात्पर्याख्यव्यापारत्रयोत्तीर्णस्य ध्वननद्योतनादिशब्दाभिधेयस्य व्यञ्जनव्यापारस्यावश्याभ्युपगन्त[2]व्यत्वाद् व्यापारस्य च वाक्यार्थत्वाभावाद् वाक्यार्थस्यैव व्यङ्ग्यरूपस्य गुणालङ्कारोपस्कर्तव्यत्वेन प्राधान्याद् विश्रान्तिधा[3]मत्वादात्मत्वं सिद्धान्तितवान् । व्यापारस्य[4] विषयमुखेन स्वरूपप्रतिलम्भात् तत्प्राधान्येन प्राधान्यात् स्वरूपेण विचार्यत्वाभावाद् विषयस्यैव समग्रभरसहिष्णुत्वात् । तस्माद्

दर्शयति । तन्मते हि काव्यात्मनः शब्दस्य त्रयो व्यापाराः, अभिधाभावकत्वभोगकृत्त्वैलक्षणाः । तत्राभिधाशब्देन शास्त्रकाव्यसाधारणो मुख्यलक्षणादिर्व्यापारोऽभिधीयते । भावकत्वभोगकृत्त्वे काव्यस्य नियते । तयोर्भावकत्वं नाम विभावादिसाधारणीकरणम् । भोगकृत्त्वं तु ताभ्यामभिधाभावकत्वाभ्यामुत्तीर्णो रसचर्वणात्मैकत्वविशिष्टः काव्यव्यापारः । वक्रोक्तिजीवितकारभट्टनायकयोर्द्वयोरपि व्यापारप्राधान्येऽविशिष्टेऽपि पूर्वत्र विशिष्टाया अभिधाया एव प्राधान्यम्, उत्तरत्र रसविषयस्य भोगकृत्त्वापरपर्यायस्य व्यञ्जनस्य । **ध्वनिकारः पुनरिति** । पुनश्शब्देनोद्भटादिमतव्यावर्तकेन ध्वनिकारमतस्य युक्तत्वं द्योतयति । **अवश्याभ्युपगन्तव्यत्वादिति** । व्यञ्जनव्यापारानभ्युपगमेऽर्थान्तरगम्यत्वोपलक्षितानां पर्यायोक्तादीनामनुत्थानात् । इयता व्यञ्जनव्यापारस्यास्तित्वं प्रतिपाद्य व्यङ्ग्यस्य प्राधान्यमुपपादयति—**व्यापारस्य** चेत्यादिना । गुणालङ्कारोपस्कर्तव्यत्वेनेत्यनेन गुणालङ्कारयोरप्राधान्यमाह । उपस्कारकं ह्युपस्कार्यं प्रति गुणीभवति । व्यापारस्य विषयमुखेनेत्यादिना व्यञ्जनव्यापारस्याप्राधान्यमुपपाद्य व्यङ्ग्यप्राधान्यमुपसंहरति – **तस्मादिति** । व्यापारस्याप्राधान्यायोपन्यस्तं विषं-

१. 'स्वी', २. 'व्यत्वा' क ख. पाठ ३. 'स्यानस्वा', ४. 'स्य च वि', ५. 'त्वात्यल' ग. पाठ. ६ 'त्मत्व' ख ग पाठ. ७ 'त्र वि' ग पाठः. ८. 'कमुप' ख. पाठः.

विषय एव व्यङ्ग्यनामा जीवितत्वेन वक्तव्यः, यस्य गुणालङ्का[1]-रकृतचारुत्वपरिग्रह[2]साम्राज्यम् । रसादयस्तु जीवितभूता नालङ्कारत्वेन वाच्याः । अलङ्काराणा[3]मुपकारकत्वा[4]द् रसादीनां च प्राधान्येनोपस्कार्यत्वात् । तस्माद् व्यङ्ग्य एव वाक्यार्थीभूतः काव्यजीवितमिति । एष एव च पक्षो वाक्यार्थविदां सहृदयानामावर्जकः । व्यञ्जनव्यापारस्य सर्वैरनपह्नुतत्वात्, तदा[5]श्रयेण च पक्षान्तरस्याप्रतिष्ठानात् । यत्तु व्यक्तिविवेककारो वाच्यस्य प्रतीयमानं प्रति लिङ्गतया व्यञ्जनस्यानुमानान्तर्भा[6]वमाख्यत्, तद् वाच्यस्य प्रतीयमाने[7]न सह तादात्म्यतदुत्पत्त्यभावादवि-

यैकनियतं समग्रभरसहिष्णुत्वं विवृणोति—यस्य गुणेति । रसादयस्त्विति । अङ्गिभूता इति शेषः । अथवा जीवितभूता इत्यस्यैवायमर्थः । तदा त्वेकवाक्यता । रसादिवदन्यस्यापि व्यङ्ग्यस्य विशिष्टस्यैव प्राधान्यमिति दर्शयन्नुपसंहरति—तस्माद् व्यङ्ग्य एवेति । इतिः समाप्तौ । अस्य ध्वनिकारपक्षस्योपपत्तिमत्त्वेन स्वाभिमतत्वं दर्शयति—एष एव चेत्यादिना । अस्तु व्यञ्जनव्यापारस्यानपह्नवः । ततः किमायातं व्यङ्ग्यप्राधान्यस्येत्यत आह—तदाश्रयण इति । पक्षान्तरस्य व्यापारादिप्राधान्यवतः । अप्रतिष्ठानं च 'व्यापारस्य विषयमुखेने'त्यादिना पूर्वमेव प्रतिपादितम् । तदनाश्रयण इति पाठे व्यञ्जनव्यापारानङ्गीकारे पर्यायोक्ताद्यलङ्कारानुदयप्रसङ्गेनोद्भटादिमतस्याप्रतिष्ठानादिति पूर्वोक्तानपह्नुतत्वोपपादनमेवार्थः । ननु महिमनि जीवति व्यञ्जनव्यापारस्य कथमनपह्नुतत्वमित्याशङ्क्यां परिहरति—यत्त्वित्यादिना । तुशब्देन शब्दविशेषात्मनः काव्यस्य शब्दव्यतिरिक्तप्रमाणव्यापारगोचरेणार्थेन चमत्कारकारित्वकथनमत्यन्तमसमीचीनमिति दर्शयति । तादात्म्यतदुत्पत्त्यभावादिति । 'भम धम्मिअ' इत्यादौ वाच्यस्य गृहभ्रमणविध्यादेः प्रतीयमानस्य गोदावरीतीरभ्रमणनिषेधादेश्च

१ 'ङ्कृतिचा', २. 'ह सा', ३ 'णा सम्रु', ४ 'त्वेन र', ५ 'दना(श्र)यणे', ६. 'न ता' क ख. पाठ. ७ 'न वि' ग पाठ.

चारिताभिधानम्। तदेतत् कुशाग्रीयधिषणक्षोदनीयमतिगहनमिति नेह प्रतन्यते। अस्ति तावद् व्यङ्ग्यनिष्ठो व्यञ्जनव्यापारः। तत्र व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यां ध्वनिगुणीभूतव्यङ्ग्याख्यौ द्वौ काव्यभेदौ। व्यङ्ग्यस्यास्फुटत्वेन गुणालङ्कारत्वे तु चित्राख्यस्तृतीयः काव्यभेदः। तत्रोत्तमो ध्वनिः। तस्य लक्षणाभिधामूलत्वेनाविवक्षितवाच्यविवक्षितान्यपरवाच्याख्यौ द्वौ भेदौ। आद्योऽप्यर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यत्वेन द्विभेदः। द्वितीयोऽप्यसंलक्ष्यक्रमसंलक्ष्यक्रमव्यङ्ग्यतया द्विविधः। लक्षणामूलः शब्दशक्तिमूलो वस्तुध्वनिः। असंलक्ष्यक्रमव्यङ्ग्योऽर्थशक्तिमूलो रसादिध्वनिः। संलक्ष्यक्रमव्यङ्ग्यः शब्दार्थोभयशक्तिमूलो वस्तुध्वनिरलङ्कारध्वनिश्चेति। तत्र रसादिध्वनिः कालिदासादिप्रबन्धेषु। गुणीभूत-

---

शिंशपावृक्षयोरिव न तादात्म्यम्। नापि धूमाग्न्योरिव तदुत्पत्तिलक्षणः कार्यकारणभावः। कुशाग्रीयं कुशाग्रसदृशम्। 'कुशाग्राच्छः' (५. ३. १०५) इति छः। **व्यङ्ग्यनिष्ठ** इति। व्यङ्ग्यपर्यवसितः। व्यङ्ग्यं प्रत्युपसर्जनीभूत इत्यर्थः। **प्राधान्याप्राधान्याभ्यामिति**। वाच्यापेक्षया। **तत्रोत्तमो ध्वनिरिति**। ध्वनिलक्षणः काव्यभेद उत्तमः। यद्यपि 'तस्य लक्षणे'त्यादिना ध्वनेरेव प्रकारभेदो दर्शितः, तथाप्यस्यार्थान्तरे सङ्क्रमितादिप्रकारवैचित्र्यस्य गुणीभूतव्यङ्ग्येऽपि साधारणत्वादुपलक्षणमेतत्। कालिदासादिप्रबन्धेषु शाकुन्तलवेणीसंहारादिषु। प्रबन्धग्रहणं चैकस्मिन् वाक्येऽपेक्षितसकलविभावानुभावव्यभिचार्युपादानस्याशक्यत्वात् कतिपयोपादाने चेतरेषामुन्नेयत्वेन तत्तदवस्थाविशेषविशिष्टानां रसादीनां स्फुटतयानभिव्यक्तेः। अलङ्कारध्वनिर्यथा—

---

१. 'भ', २. 'त्वेऽल', ३. 'पक्षे तु', ४. 'मव्यङ्ग्यसं' क. पाठः. ५. 'ले', ६. 'स्तुरूपोऽलङ्काररूपो रसरूपश्च। अ' क ख. पाठः. ७. 'षु। चि', ८. 'पि तस्या' ख. पाठः. ९. 'न वि' ग. पाठः

व्यङ्ग्यं वाच्याङ्गत्वादिभेदैर्यथासम्भवं समासोक्त्यादौ प्रदर्शितम्[1]। चित्रं तु शब्दार्थोभयालङ्कारस्वभावतया[2] बहुतर[3]प्रभेदम्। तथाहि—

**इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्यप्रकाराः ॥ १ ॥**

आदौ पौनरुक्त्यप्रकारवचनं वक्ष्यमाणालङ्काराणां

---

अर्जुनगुणानुरागी रक्षितगोमण्डलो बलज्येष्ठः ।
यदुपतिरभिमतसत्यः शरदुतं जयति विबुधहितनिरतः ॥

अत्र वर्णनीये रविवर्मणि अभिधाया नियन्त्रणात् शब्दशक्तिमूलानुरणनव्यङ्ग्येन कृष्णेन सहोपमानोपमेयभावप्रतीतेरुपमालङ्कारो व्यङ्ग्यः। वस्तुध्वनिर्यथा—

कथयामि वः क्षितीशाः! रविवर्मणि भजत वैतसीं वृत्तिम्।
अस्य हि रोपो रोपः प्रसाद एव प्रसादश्च ॥

अत्र कथयामि वः क्षितीशा इति वाक्यरूपेणोपदेशपर्यवसायिनार्थान्तरसङ्क्रमितवाच्येन वक्तुर्नैभृत्यं व्यज्यते। उत्तरार्धे रोपो रोपः प्रसाद एव प्रसाद इत्यत्र पदावृत्तिभ्यां साफल्यपर्यवसायि(नी)भ्यामर्थान्तरसङ्क्रमितवाच्याभ्यां वर्णनीयस्यावश्यभजनीयत्वलक्षणं वस्तु व्यज्यते। एवं तावद् ध्वनिकारमतस्यैवानवद्यतां दर्शयित्वा तेनैव ध्वनिगुणीभूतव्यङ्ग्ययोः प्रपञ्चितत्वात् संक्षेपेण तत्प्रकारानुद्दिश्य चित्रकाव्यप्रभेदान् दर्शयितुमुपक्रमते— चित्रं त्वित्यादिना। तुशब्देन अन्यत्राप्रपञ्चितत्वाद् बहुवक्तव्यत्वाच्च स्वसंरम्भगोचरतां द्योतयति। शब्दार्थेत्यादि। शब्दार्थोभयालङ्कारभेदादवान्तरभेदाच्च।

ननु 'गुर्वलङ्कारसूत्राणामि'त्यनेन सूत्राणामलङ्कारस्वरूपनिरूपणपरत्वं दर्शितम्। तच्च प्रथमसूत्रे न दृश्यते। अत आह—आदावित्यादि।

---

१. 'प्रस्तु', २. 'र्थाल', ३. 'रभे' क. ख. पाठ ४. 'क्षयवृत्तिरु' क. पाठः.

कक्ष्यात्रिभागघटनार्थम् । अर्थापेक्षया शब्दस्य प्रतीतावन्तरङ्गत्वेऽपि प्रथममर्थगतनिर्देशश्चिरन्तनप्रसिद्धया पुनरुक्तवदाभासस्य पूर्वं लक्षणार्थः । इह शाब्दे प्रस्थाने । इतिशब्दः प्रकारे । त्रिशब्दादेव सङ्ख्यासमाप्तिसिद्धेः ॥

**तत्रार्थपौनरुक्त्यं प्ररूढं दोषः ॥ २ ॥**

प्ररूढाप्ररूढत्वेन द्वैविध्यम् । प्रथमं[2] हेयवचनमुपादेये[3] विश्रान्त्यर्थम् । तत्रेति त्रयनिर्धारणे । यथावभासनं विश्रान्तिः प्ररोहः ॥

**आमुखावभासनं पुनरुक्तवदाभासम् ॥ ३ ॥**

आमुखग्रहणं पर्यवसानान्यथात्वप्रतिपत्त्यर्थम् । लक्ष्यनिर्देशे नापुंसकः संस्कारो लौकिकालङ्कारवैधर्म्येण काव्या-

---

**कक्ष्याविभागेति** । अर्थपौनरुक्त्ये पुनरुक्तवदाभासः, शब्दपौनरुक्त्ये छेकानुप्रासादिः, उभयपौनरुक्त्ये लाटानुप्रासः इत्येवंरूपः कक्ष्याविभागः । **अर्थापेक्षयेत्यादि** । प्रथमप्रतिपन्नस्वरूपेण शब्देनार्थप्रत्ययादन्तरङ्गत्वम् । **चिरन्तनप्रसिद्धयेति** । उद्भटादिभिः[4] प्रथममलङ्कारेषु पुनरुक्तवदाभासो लक्षितः । **शाब्द इति** । शब्देनार्थव्यवहारलक्षणे ।

"इतिर्हेतुप्रकरणप्रकारादिसमाप्तिषु"

इति समाप्त्यर्थत्वेन पठितस्यापीतिशब्दस्य नात्र तदर्थत्वमित्याह — **इतिशब्दः प्रकार इति** । **त्रिशब्दादेवेति** । त्रिशब्दस्य न्यूनाधिकसङ्ख्याव्यवच्छेदपरत्वात् ॥

अलङ्कारप्रस्तावादप्रस्तुतत्वेऽपि दोषरूपपौनरुक्त्यस्वरूपकथनमन्यार्थमित्याह — **प्रथममित्यादि** । **यथावभासनमित्यादि** । आपातवत् पर्यवसानवेलायामप्यैकार्थ्यप्रतीतिरित्यर्थः ॥

**नापुंसक इति** । सोरमादेशलक्षणः । यथा लौकिकाः कटकमुकुटा-

---

१. 'देति चा', २. 'मनुपा', ३ 'य' क रा. पाठ. ४. 'भिर्हि प्र' क. पाठः.

लङ्काराणामलङ्कार्यपारतन्त्र्यध्वननार्थः । अर्थपौनरुक्त्यादेवार्थाश्रितत्वादर्थालङ्कारोऽयम् । प्रभेदास्तु विस्तरभयान्नोच्यन्ते । उदाहरणं मङ्खीये श्रीकण्ठस्तवे—

"अहीनभुजगाधीशवपुर्वलयकङ्कणम् ।
शैलादिनन्दिचरितं क्षतकन्दर्पदर्पकम् ॥
वृषपुङ्गवलक्ष्माणं शिखिपावकलोचनम् ।
ससर्वमङ्गलं नौमि पार्वतीसेखमीश्वरम् ॥"

इत्यादि । एतच्च सुबन्तापेक्षया । तिङन्तापेक्षया यथा तत्रैव—

"भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशेखरः ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥"

---

दयोऽलङ्कारा अलङ्कार्येभ्यः करादिभ्यः पृथग्भूय स्वातन्त्र्येणाप्युपलभ्यन्ते, नैवं काव्यालङ्काराः, अलङ्कार्यौ शब्दार्थावन्तरेण पृथगनुपलब्धेः । अतश्चैषां तत्पारतन्त्र्यम् । तच्च स्वलिङ्गपरिहारेण स्वाश्रयस्य काव्यस्य लिङ्गेन निर्देशादवगम्यते, यथा शुक्लं वस्त्रमिति शौक्ल्यस्य । तदेवमलङ्कार्यपारतन्त्र्यस्यात्र सूचितत्वात् छेकानुप्रासादिषु तदनादरः । अस्य पुनरुक्तवदाभासस्यान्यैः शब्दालङ्कारत्वमुक्तम् । तदयुक्तमित्याह — **अर्थपौनरुक्त्यादेवे**त्यादि । **प्रभेदास्त्व**िति । सार्थकानर्थकसभङ्गाभङ्गशब्दनिष्ठत्वपदद्वयैकपदपर्यायपरिवृत्त्यक्षमत्वादयः । **अहीने**त्यादि । हीनादन्यः, अहीनामिनश्च । वलयं सन्निवेशविशेषः, करभूषणं च । शैलादि नन्दयितुं शीलवत्, शैलादिर्नन्दी चेति श्रीनन्दिकेश्वरस्य नामनी । दर्पशब्दात् समासान्ते कपि दर्पक इति रूपं, कामपर्यायश्च । पुङ्गवः श्रेष्ठः, पुंस्त्वविशि(ष्ट ? ष्टो) गौश्च । शिखी प्रशस्तशिखः, अग्निश्च । ससर्वमङ्गलं सर्वमङ्गलैः सहितं, सर्वमङ्गलया सहितं च । कुण्डली कुण्डलवान्, सर्पश्च । व्यक्ताः शशिनः शुभ्रा अंशवः शेखरं यस्य, शशी शुभ्रांशुश्चेति

---

१. 'रत्वं ज्ञेयम्', २. 'परमेश्व', ३. 'ति । ए', ४. 'या । य' ख. पाठः. ५. 'त्र' क. पाठः. ६. 'कश' ख. पाठः ७. 'नी च । द' क पाठः.

इत्यादि। शब्दपौनरुक्त्यं तु व्यञ्जनमात्रपौनरुक्त्यं स्वरव्यञ्जनसमुदायपौनरुक्त्यं च। अलङ्कारप्रस्तावे केवलस्वरपौनरुक्त्यमचारुत्वान्न गण्यत इति द्वैविध्यमुक्तम्॥

**सङ्ख्यानियमे पूर्वं छेकानुप्रासः॥ ४॥**

द्वयोर्व्यञ्जनसमुदाययोः परस्परमनेकधा सादृश्यं सङ्ख्यानियमः। पूर्वं व्यञ्जनमात्राश्रितम्। यथा—

"किं नाम दर्दुर दुरध्यवसाय! सायं
कायं निपीड्य निनदं कुरुषे रुषेव।

चन्द्रनामनी च। व्यक्तशिशुशुभ्रांशुशीतगुरिति पाठे व्यक्तशिशुधवलांशुत्वविशिष्टः शीतगुः चन्द्रः शेखरत्वेन यस्यास्ति इत्यर्थः, शुभ्रांशुः शीतगुरिति चन्द्रनामनी च। सदापायात् सततमपायतः, सततं पायाच्च। चेतोहरो मनोहरः, हरः शिव इति शिवनामनी च। भुजङ्गकुण्डलीत्यादौ सुबन्तपौनरुक्त्ये सत्यपि सदा पायाद् अव्याद् इति तिङन्तपौनरुक्त्यप्रतिभासात् तिङन्तापेक्षयेत्युक्तम्। अत्रोदाहरणद्वये सर्वत्रैकपदपर्यायपरिवृत्त्यक्षमत्वं, सुबन्तविषये सार्थकपदनिष्ठत्वं, तिङन्तविषये सार्थकनिरर्थकपदनिष्ठत्वं, कन्दर्पदर्पकेत्यत्र भङ्गनिष्ठत्वं च। पदद्वयपर्यायपरिवृत्त्यक्षमत्वादौ यथा—

वितरणसमराहितं त्वामरिचक्रविमर्दविहितहेवाकम्।
लब्ध्वा नायकमनघं विभाति यदुवीर! मेदिनीवलयम्॥

अत्र रणसमरेत्यरिचक्रेति च पदद्वयपर्यायपरिवृत्त्यक्षमत्वम्। आद्ये द्वयोरपि नैरर्थक्यं, द्वितीये सार्थकत्वम्। व्यञ्जनमा(त्रमि? त्रे)ति मात्रशब्देन स्वरसाम्यनियमो व्यावर्त्यते, न तु तदभावः प्रतिपाद्यते। अतः सायसायमित्यादौ स्वरसाम्यं न दोषाय। स्वरसाम्यपौनरुक्त्यावचने नासम्भवो हेतुः, किन्त्वनलङ्कारत्वमेवेत्याह—**अलङ्कारप्रस्तावे** इति॥

१. 'क्त्यं व्य' ग. पाठः. २. 'मात्रि', ३. 'उदाहरणं— किं', ४. 'स्त' ख. पाठः. ५ 'र्थप' क पाठः. ६. 'त्वम्। प' रा. पाठः.

एतानि केलिरसितानि सितच्छदाना-
माकर्ण्य कर्णमधुराणि न लज्जितोऽसि ॥"

अत्र सायंशब्देऽस्यालङ्कारस्य यकारमात्रसादृश्यापेक्षया वृत्त्यनुप्रासेन सहैकाभिधानानुप्रवेशलक्षणः सङ्करः । छेका विदग्धाः ॥

**अन्यथा तु वृत्त्यनुप्रासः ॥ ५ ॥**

केवलव्यञ्जनसादृश्यमेकधा समुदायसादृश्यं त्र्यादीनां च परस्परसादृश्यमन्यथाभावः । वृत्तिस्तु रसविषयो व्यापारः । तद्वती पुनर्वर्णरचनेह वृत्तिः । सा च परुषकोमलमध्यमवर्णारब्धत्वात् त्रिधा । तदुपलक्षितोऽयमनुप्रासः । यथा मदीये श्रीकण्ठस्तवे —

---

व्यञ्जनमात्राश्रितमित्यनेन सूत्रस्थस्य पूर्वशब्दस्यार्थमाह । **किं नामेत्यादि** । मधुरवचसां मध्ये कटुभाषिणं कश्चिदप्रस्तुतसरूपस्तुत्या प्रतिक्षिपति । अत्र दुरदुरेति द्वौ व्यञ्जनसमुदायौ मिथः सदृशौ । एवं सायसाय रुपेरुपे सितासित कर्णकर्णेत्यत्र । इत्यनेकैधात्वम् । **वृत्त्युनुप्रासेनेत्यादि** । केवलव्यञ्जनसादृश्यलक्षणप्रकारविशिष्टेन । **एकाभिधानेति** । सायसायमित्यत्र दुरदुरेतिवच्छेकानुप्रासः । सायं कायमित्यत्र 'आटोपेन पटीयसे'त्यादिवद् वृत्त्यनुप्रासः । तावुभावप्येकं सायंशब्दमाश्रयतः । अप्रस्तुतत्वेऽपि सङ्करप्रदर्शनं तस्य तस्यालङ्कारस्यालङ्कारान्तरासंस्पृष्टोदाहरणदौर्लभ्यं प्रधानेन व्यपदेश च ख्यापयितुम् । **छेका विदग्धा** इति । न त्वालयवर्तिनो मृगपक्षिणः । अनेनच्छेकानामनुमतत्वेन सम्बन्धी अनुप्रास इति अस्य निरुक्तिं दर्शयति । पूर्वत्रापुनरुक्तस्यापि पुनरुक्तवदाभासः प्रतिभास इत्यस्यार्थस्य स्फुटत्वाद् न निरुक्तिः कृता ॥

केवलव्यञ्जनसादृश्यमित्यनेन व्यञ्जनसमुदाययोरित्यस्यान्यथाभावो

---

१ 'ध्यव' ख पाठ २. 'चरिते — आ', ३. 'कप्रकारत्व', ४. 'स्यालङ्कारा' क. ख पाठ·

"आटोपेन पटीयसा यदपि सा वाणी कवेरामुखे
खेलन्ती प्रथने तथापि कुरुते नो सन्मनोरञ्जनम् ।
न स्याद्यावदमन्दसुन्दररसालङ्कारझङ्कारितः
स प्रस्यन्दिलसद्रसायनरसासारानुसारी रसः ॥"

**स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम् ॥ ६ ॥**

अत्र क्वचिद् भिन्नार्थत्वं, क्वचिदनर्थकत्वं, क्वचिदेकस्यानर्थकत्वमपरस्य सार्थकत्वमिति संक्षेपतः प्रकारत्रयम् । यथा —

"यो यः पश्यति तन्नेत्रे रुचिरे वनजायते ।
तस्य तस्यान्यनेत्रेषु रुचिरेव न जायते ॥"

इदं च सार्थकत्वे । एवमन्यत्तु ज्ञेयम् ॥

---

दर्शितः, एकधेत्यनेनानेकधेत्यस्य, स्यादीनामित्यनेन द्वयोरित्यस्य । आटोपेनेत्यादि । पूर्वार्धे केवलव्यञ्जनसादृश्यम् । अलङ्कारझङ्कारित इत्यत्र व्यञ्जनसमुदाययोरेकधा सादृश्यम् । रसायनेत्यादौ रेफसकारात्मनां स्यादीनां व्यञ्जनसमुदायानां सादृश्यम् ॥

संक्षेपत इति । अत्रैव पादपादैकदेशादिवृत्तीनां सकलभेदानामन्तर्भाव इति भावः । यो य इत्यादि । वनजे तामरसे इवायते रुचिरे इति नेत्रयोर्विशेषणं । अन्यनेत्रेष्वित्यत्र 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावः । रुचिरिच्छैव न जायते । एवमन्यत्त्विति । उभयानर्थकत्वे यथा —

ददद्नर्थित एव मनोरथादधिकमार्यिजनाय यदूद्वहः ।
कथमिवास्तु पुरन्दरशासिना समधुरो मधुरोऽस्मिन्विचक्षणः ॥

---

१. 'गुणाल' २. 'न्द ३. थेन्व', ४. नितः' ४ ख पाठः. ५. 'दमगा' ग. पाठ ६. 'न्यजे' ग पाठ. ७. 'भरता' ८. शृं', ९. 'ि' ग', १०. 'ेषु', ११. ि' ख पाठ

शब्दार्थपौनरुक्त्यं प्ररूढं दोषः ॥ ७ ॥

प्ररूढग्रहणं वक्ष्यमाणालङ्कारपौनरुक्त्यवैलक्षण्यार्थम्। यदाहुः — "शब्दार्थयोः पुनर्वचनं पौनरुक्त्यमन्यत्रानुवादात्" इति ॥

तात्पर्यभेदवत् तु लाटानुप्रासः ॥ ८ ॥

तात्पर्यमन्यपरत्वम्। तदेव भिद्यते यत्र, न तु शब्दार्थस्वरूपम्। यथा —

"ताला जाअन्ति गुणा जाला दे सहिअएहि घेप्पन्ति।
रइकिरणाणुग्गहिआइ होन्ति कमलाइ कमलाइ ॥"

---

पूर्वभागानर्थक्ये यथा —

इतरपार्थिववद् यदुभूपतेः स्तुतिविधौ क इव क्षमते कविः।
जयति कर्णमहष्टचरेण यो वितरणेन रणेन च फल्गुनम् ॥

उत्तरभागानर्थक्ये यथा —

अभिजनश्रुतिविक्रमसम्पदः समवयन्ति यदुक्षितिप! त्वयि।
तदपि नैव तवास्ति वपुःश्रिया विजितदर्पक! दर्पकलङ्किता ॥

वक्ष्यमाणेति अलङ्कारभूतलाटानुप्रासलक्षणशब्दार्थपौनरुक्त्यव्यावृत्त्यर्थम्। प्ररूढं दोष इत्यत्र वृद्धसम्मतिमाह—शब्दार्थयोरित्यादि ॥

तात्पर्यभेदवत्त्वित्यादि[1]। शब्दार्थपौनरुक्त्यमित्यनुवर्तते। शब्दार्थपौनरुक्त्यरूपत्वादेवानुप्रासप्रस्तावोलङ्घनेनेह लक्षितः। अन्यपरत्वम् उद्देश्यविधेयत्वादिभेदादन्वयभेदः। ताला इत्यादि।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

अत्र प्रथमस्य कमलशब्दस्य रविकिरणानुगृहीतानीत्यनेनान्वितस्योद्देश्यार्थवृत्तित्वं, द्वितीयस्य तु भवन्तीत्यनेनान्वितस्य विधेयार्थनिष्ठत्वम्।

---

१. 'शब्दपौनरुक्त्यप्रभेदवं' ख. ग. पाठः.

"अत्राब्जपत्त्रनयने! नयने निमील्य" इत्यादौ विभक्त्यादेरपौनरुक्त्येऽपि बहुतरशब्दार्थपौनरुक्त्याल्लाटानुप्रासत्वमेव । "काशा काशा इवे"त्यादावनन्वयेन सहास्य सङ्करः । अन्योन्यापेक्षशब्दार्थगतत्वेनार्थमात्रगतत्वेन च व्यवस्थितेर्भिन्नविषयत्वात् ।

अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम् ।
अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकम् ॥

तदेवं पौनरुक्त्ये पञ्चालङ्काराः ॥ ९ ॥

निगदव्याख्यानमेतत् ॥

---

यद्यप्यस्य शोभावत्त्वादिलक्षणेऽर्थान्तरे सङ्क्रमितत्वादर्थभेदः, तथापि सङ्केतितार्थापेक्षया पौनरुक्त्यं द्रष्टव्यम् । 'अत्राब्जपत्रनयने' इत्यादौ नयने नयने इत्यत्र यद्यपि शब्दस्वरूपं न भिद्यते, तथापि पूर्वत्रैकत्वविशिष्टायाः संबोधनमेवार्थः, उत्तरत्र *द्वित्वविशिष्टयोर्दृशोः कर्मत्वमित्यर्थभेदात्* कथं लाटानुप्रासत्वमित्याशङ्क्य परिहरति— विभक्त्यादेरित्यादि । आदिशब्देन वचनं गृह्यते । वर्णमात्रविभक्त्याद्यपेक्षया बहुतरस्य नयनेति प्रातिपदिकस्यार्थपौनरुक्त्यान्न दोष इत्यर्थः । अत्र पूर्वो नयनशब्दोऽब्जपत्रसादृश्यविशिष्टार्थवृत्तिः सम्बोधनीयामुपलक्षयति । उत्तरस्तु निमीलनक्रियाकर्माभिधायी *निमील्येत्यनेनान्वयं* भजते । काशा इत्यादि । सङ्करः एकवाचकानुप्रवेशलक्षणः । ननु लाटानुप्रासादविविक्तविषयत्वात् तस्य बहुविषयत्वाच्चानन्वयः पृथगलङ्कारत्वेन न लक्षणीय एव, कुतः सङ्कर इत्याशङ्क्यानन्वयस्य विविक्तोदाहरणलाभावेऽप्यलङ्कार्यात्मन आश्रयस्य भेदाद् भेद इत्याह— अन्योन्यापेक्षेति । शब्दावर्थभेदमपेक्षेते, अर्थौ च शब्दाभेदमित्यर्थः । ननु यद्यर्थाश्रयोऽनन्वयः, तत् किमेकशब्दनिबन्धेनेत्यत आह— अनन्वय इत्यादि । औचित्यादिति । अन्यथा शब्दभेदेनार्थान्तरतया प्रतिभासादुपमानोपमेययोरेकत्वप्रतीतिविलम्बः स्यात् ॥

१. 'र्थैं' क. ग. पाठः. २. 'चो. क', ३. 'यात्', ४. 'न ल' ग. घ पाठः. ५ 'र्मी क्ष' क. पाठः.

**वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम् ॥ १० ॥**

पौनरुक्त्यप्रस्तावे स्थानविशेषश्लिष्टवर्णपौनरुक्त्यात्मकचित्रवचनम् । यद्यपि लिप्यक्षराणां खड्गादिसन्निवेशविशिष्टत्वं, तथापि श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन तेषां लोके प्रतीतेर्वाचकालङ्कारोऽयम्[२] । आदिग्रहणाद् यथाव्युत्पत्तिसम्भवं पद्मबन्धादिपरिग्रहः । यथा —

"भासते प्रतिभासार! रसाभाता हताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥"

एषोऽष्टदलः[३] पद्मबन्धः । अत्र दिग्दलेषु निर्गमप्रवेशाभ्यां

---

**वर्णानामित्यादि** । लक्ष्यलक्षणयोर्वैयधिकरण्येन निर्देश उद्भटेनापि कृतः — 'छेकानुप्रासस्तु द्वयोर्द्वयोः सुसदृशाकृताविति' । **स्थानविशेषश्लिष्टेति** । कर्णिकादिस्थानविशेषन्यस्त एकस्मिन् वर्णेऽनेकवर्णोपलम्भादनेकवर्णस्य सङ्गतत्वाद् वा । अस्य च स्थानविशेषश्लिष्टपौनरुक्त्यात्मकत्वस्य प्रकरणसङ्गतौ हेतुगर्भविशेषणता । श्रवणेन्द्रियग्राह्यस्य शब्दत्वात् खड्गादिसन्निवेशविशेषभाजां लिप्यक्षराणां चक्षुर्ग्राह्यत्वादशब्दत्वात् चित्रस्य शब्दालङ्कारत्वं न घटते इत्याशङ्क्य परिहरति — **यद्यपीत्यादिना** । अर्थवत एव शब्दस्यालङ्कारत्वाद् वाचकालङ्कार इत्युक्तम् । चित्रशब्दस्य नपुंसकत्वेऽप्यलङ्कारापेक्षयायमिति पुलिङ्गनिर्देशः । यथाव्युत्पत्तिसम्भवं व्युत्पत्तिसम्भवावनतिक्रम्य । **पद्मबन्धादीति** । आदिशब्देन चक्रमुरजबन्धादिपरिग्रहः । **भासत इत्यादि** । प्रतिभासार ! ते तव सभा रसाभाता रसेन आ समन्ताद् दीप्ता । हताविभा हता अविभा अज्ञा यस्याः सा, अविभा अज्ञान वा यस्याः सा । भावितः भावनया विषयीकृत आत्मा यया सा भावितात्मा । वादे कथाविशेषे शुभा । देवाभा देवसदृशी । सभासभासदोरभेदोपचारादेवमुक्तम् । **दिग्दलेष्विति** । सते सार तावि वाटे इति चतुर्णामक्षरयुग्मानां कर्णिकातो

---

१. 'र्षा' २. 'क', ३. 'ल' क ख पाठ. ४. 'न्ध इत्यादी' क. पाठः.

श्लिष्टाक्षरत्वम् । विदिग्दलेष्वन्यथा । कर्णिकाक्षरं तु श्लिष्टमेव ॥

**उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे [1]उपमा ॥ ११ ॥**

निर्गमप्रवेशयोरानुलोम्येन प्रातिलोम्येन च श्लिष्टाक्षरत्वम् । विदिग्दलेष्विति । प्रति ताह त्माशु यत इत्येषामक्षरयुग्मानां सकृदेव पाठादन्यथात्वमश्लिष्टाक्षरता । कर्णिकाक्षरं तु श्लिष्टमेवेति । भा इत्येतस्याष्टकृत्वः पाठात् सूत्रे प्रतिपदोक्तं खड्गमष्टछायादिशब्दोपात्तस्य पद्मबन्धस्योदाहरणप्रदर्शनं खड्गस्य बहुभिर्दर्शितत्वादतिश्लिष्टत्वाद्वेत्याहुः । खड्गस्य दिदृक्षितत्वे पुनरिदमुदाहरणं —

मानन्दवन्दिजनगीतविचित्रभूमा
मातङ्गमन्थरगतिर्महनीयभासा ।
सारोत्तरेण वपुषा परिपन्थिहिंसा-
मातत्यसङ्ग! यदुनाथ! जयाङ्गजश्रीः ॥

मादितशत्रुदेहगलितरुधिरतटिनी
नीतविवृद्धकीर्तिजलधिभरितनभमा ।
माहसवर्जितेन यदुवर! गुरुतरमा
सारवतीभयात! धरणिरजनि भवता ॥

अनयोश्चायं प्रस्तारः — द्वादिकान्ते मेति शब्दं न्यस्य प्रथमं पादमधोधःक्रमेण न्यस्य तदन्तगतं मागन्दं नीशब्दं वा शिखायां न्यस्य तदेवारभ्योर्ध्वक्रमेण द्वितीयं पादं यावत् मागन्दं न्यस्येत् । तस्यैव मागन्दस्य दाक्षिणोत्तरपार्श्वयोस्तृतीयपादस्यार्धं मागन्दादिमन्त्यार्धं च तदन्तं न्यस्येत् । एषा द्वादिका । ततस्तमेव मागन्दमाग्योर्ध्वक्रमेण वर्णत्रयं तदुपरि गकारो भकारो वा । तत्पार्श्वे पूर्ववत् त्रींस्त्रीन्धनुरथतुगे वर्णान् न्यस्येत् । एतत्फलकम् । ततस्तदुपरि वर्णद्वयम् । एतन्मस्तकम् ॥

1. 'मेदेषु' क. पाठ.

अर्थालङ्कारप्रकरणमिदम् । उपमानोपमेययोरित्यप्रतीतोपमानोपमेयनिषेधार्थम् । साधर्म्ये त्रयः प्रकाराः । भेदप्राधान्यं व्यतिरेकवत् । अभेदप्राधान्यं रूपकवत् । द्वयोस्तुल्यत्वं यथास्याम् । यदाहुः — "यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः" इति । उपमैवं च प्रकारवैचित्र्येणानेकालङ्कारबीजभूतेति प्रथमं निर्दिष्टा । अस्याश्च पूर्णालुप्तादित्वभेदाद् बहुविधत्वं चिरन्तनैरुक्तम् ।

---

अर्थालङ्कारप्रकरणमिदमित्यनेनोपमादेर्भोजेनोक्तमुभयालङ्कारत्वं शब्दसाम्ये रुद्रटस्याभिमतं शब्दालङ्कारत्वमर्थश्लेषादेश्च काव्यप्रकाशकारोक्तं शब्दालङ्कारत्वं च निरस्यति । ननु साधर्म्यं समानधर्मसम्बन्धः । स चोपमानोपमेययोरेव सम्भवति, न कार्यकारणादिकयोरिति साधर्म्ये इत्यनेनैव गतार्थत्वादुपमानोपमेययोरिति न निर्देष्टव्यमत आह — **उपमानोपमेययोरित्यप्रतीतेति** । "कुमुदमिव मुखं तस्या" इत्यादौ । अत एवो मानोपमेयग्रहणादनन्वयस्योपमेयोपमायाश्च व्यावृत्तिः । लोके हि भिन्नयोरुपमानोपमेयत्वे व्यवस्थितत्वेन प्रतीयेते । तत्रानन्वये भेदाभावः । उपमेयोपमायां व्यवस्थाया अन्यथाभावः । भेदाभेदतुल्यत्व इत्यनेन रूपकादेर्व्यतिरेकादेश्च व्यावृत्तिः । साधर्म्य इत्यनेनासदृशोपमादेः । **व्यतिरेकवदिति** । यथा व्यतिरेक इत्यर्थः । **यत्र किञ्चिदित्यादि** । किञ्चित्सामान्यमित्यनेनाभेदो दर्शितः, कश्चिच्च विशेष इत्यनेन भेदः । **पूर्णेत्यादि** । उपमानोपमेयसाधारणधर्मोपमाद्योतकानामुपादाने पूर्णा । सा च षोढा कथिता —

"श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा"

इति । तत्रैवाद्युपादाने श्रौती । तुल्यादिशब्दोपादाने आर्थी । यथा —

वाचं वाचां यशेशः प्रथयसि निधिरस्यंशुमालीव धाम्नां
रक्ताङ्गो भौमवत् त्वं तव भृगुसुतवत् काव्यशब्देन रूढिः ।

---

१ 'षे. ।', २. 'श्चिद् श्चि', ३ 'व प्र', ४. 'त्वात्व' क. ख. पाठः.

कान्त्या तुल्यस्त्वमिन्दोर्बुधशनिसमता युज्यते ते कलाव-
न्मिश्रानन्दैकहेतोस्तदसि यदुनृप! ज्योतिषां सञ्चयस्त्वम् ॥

एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता। तत्र धर्मलोपे पञ्चविधत्वमुक्तं—

"तद्वद् धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः"

इति। यथा—

कृतान्त इव विद्विषां प्रणयिनां यथा स्वर्द्रुमो
विहारगिरिसन्निभो यदुनरेन्द्र! वीरश्रियः।
समश्च कुसुमेषुणा त्वमसि कामिनीनामतः
पुनस्तव महीक्षितो दिवसदीपकल्पाः परे ॥

द्योतकलोपे षड्विधमुक्तम् —

"वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि।
कर्मकर्त्रोर्णमुलि"

इति। यथा—

कुन्दश्वेतं यशस्ते तुहिनकरकरीयन्ति नित्यं चकोराः
कोशागारे स्ववेश्मीयति बुधनिवहस्तावके यादवेन्द्र!।
मध्याह्नार्कप्रतापं प्रतपति च भवानन्धकारायमाणान्
विद्राव्याजौ द्विपस्तत्कथमितरजनस्तावमेते स्तुमस्त्वाम् ॥

उपमानस्यानुपादाने धर्मद्योतकयोर्धर्मोपमानयोश्च लोपे प्रत्येकं द्वैविध्यम्। तदुक्तम् —

"उपमानानुपादाने वाक्यगाथ समासगा"
"एतद्विलोपे क्विप्समासगा।
धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते।"

द्योतकोपमेययोर्लोपे द्योतकोपमेयधर्माणां लोपे चैकधा। तदुक्तं—'क्यचि वाद्युपमेयासे' इति, 'त्रिलोपे च समासगे'ति च। अन्ये तु द्योतकोपमानधर्माणां लोपात् त्रिलोपमाहुः। एवमुपमानादिलोपेऽष्टविधत्वम्। यथा—

फणधरभुजम्याजौ यस्य प्रतापविभावसौ
शलभति रिपुस्तामस्तुल्यो न यस्य दयाविधौ।

१. 'त' ख. पाठः

तत्रापि साधारणधर्मस्य क्वचिदनुगामितयैकरूप्येण निर्देशः। क्वचित् वस्तुप्रतिवस्तुभावेन पृथङ् निर्देशः। पृथङ् निर्देशे च सम्बन्धिभेदमात्रं प्रतिवस्तूपमावत्। बिम्बप्रतिबिम्बभावो वा दृष्टान्तवत्। क्रमेणोदाहरणानि —

वसु च वितरन्नर्थिभ्यो यः सहस्रकरीयति
त्रिजगति भवेत् को नामास्योपमा रविवर्मणः॥

अत्र फणधरभुजस्येति प्रतापविभावसाविति च बहुव्रीहौ तत्पुरुषे च समासे शलभतीति क्विपि च धर्मद्योतकयोर्लोपः। तुल्यो न यस्य दयाविधाविति को नामेत्यादौ चोपमानस्य धर्मोपमानयोश्च लोपः। सहस्रकरीयतीत्यत्रात्मानं सहस्रकरमिवाचरतीत्यर्थप्रतीतेः क्यचि द्योतकोपमेययोर्लोप इति पञ्चभेदा दर्शिताः। इतरस्य भेदत्रयस्योदाहरणं —

यदुनाथसमो नास्तीत्याहुः स्थाने मृगीदृशः।
नहि संवननं तासां क्वचित् तद्रूपसन्निभम्॥

अत्र यदुनाथसमो नास्तीति नहि संवननं तासामित्यादौ च वृत्तौ च धर्मोपमानयोरुपमानस्य च लोपः। मृगीदृश इत्यत्र त्रिलोप इति पञ्चविंशतिरुपमाभेदाः। आदिशब्देन मालारशनोपमयोर्ग्रहणम्। लुप्तापूर्णात्वभेदादिति पाठे मालारशनोपमे अत्रैवान्तर्भूते इति न पृथगुपात्ते। पुंवद्भावाभावश्च पूर्णालुप्ताशब्दयोः संज्ञात्वेन गुणवचनत्वाभावात्। तयोश्चान्तर्भूतत्वेऽप्यन्यैः पृथगुपादानादस्माभिरुदाहरण प्रदर्श्यते। तत्र मालोपमायास्तु बहूपमानोपादानलक्षणायाः 'प्रभामहत्ये'त्येतदेवोदाहरणम्। उत्तरोत्तरग्रथनात्मिका रशनोपमा यथा —

वपुरिव मधुरं वचः प्रसन्नं वच इव कूपकभूपते! नमस्ते।
मन इव चरितं विशुद्धमन्यांश्चरितमिव क्षितिपान् यशोऽतिशेते॥

एषु च प्रभेदेषु यथासम्भवं प्रकारत्रैविध्यमन्यैरप्रदर्शितं दर्शयति—तत्रापीत्यादिना। साधरणधर्मस्य धर्मरूपस्य वा परावच्छेदकतयारोपितधर्मत्वस्य धर्मिरूपस्य वा। तत्रैकरूप्येण निर्देशो धर्मरूपस्यैव। सम्बन्धिभेदमात्रमिति। उपमानोपमेयलक्षणधर्मिभेदादेव भेदो न स्वरू-

१. 'र्ण प्र' ग. पाठ. २. 'च ध' क पाठः. ३. 'मार्गाश्च' ख. पाठः,

"प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥"

"यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥"

अत्र वलितत्वावृत्तत्वे सम्बन्धिभेदाद् भिन्ने । धर्म्यभिप्रायेण तु बिम्बप्रतिबिम्बत्वमेव ।

"पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन ।

पतेः । अयमपि प्रकारो धर्मरूपस्यैव । बिम्बप्रतिबिम्बभावो मिथः सादृश्यम्, अयं तु धर्मधर्मिणोरुभयोरपि भवति । प्रभामहत्येत्यादि । अत्र दीपादीनामुपमानानां हिमवत उपमेयस्य च पूतत्वविभूषितत्वे अनुगामितयैकरूप्येण निर्दिष्टे । सम्बन्धिभेदादिति सम्बन्धिनोः कन्धरावृन्तयोर्भेदात्, न स्वरूपतः । अनयोश्चोपमानोपमेयभावः स्वसम्बन्धिनोर्मुखशतपत्रयोरभिधानसामर्थ्यादवसीयते । धर्म्यभिप्रायेणेति । धर्मिणोः समानधर्मत्वेऽभिप्रेते बिम्बप्रतिबिम्बभाव एव भवति, न सम्बन्धिभेदमात्रम् । धर्मयोस्तूभयमपि भवति । तत्र सम्बन्धिभेदमात्र उदाहृतम् । बिम्बप्रतिबिम्बभावे यथा —

अनिशं निशम्यमाने रविवर्मनरेन्द्र! भाषिते भवतः ।
अमृत इव पीयमाने निर्वृतिमुपयाति सुमनसां वर्गः ॥

अत्र वचनामृतयोरुपमेयोपमानयोः निशम्यमानपीयमानत्वे धर्मौ बिम्बप्रतिबिम्बत्वेन निर्दिष्टौ । अन्ये तु बिम्बप्रतिबिम्बभावस्यापि विद्यमानत्वात् तमप्यत्रैव दर्शयितुमाह — धर्म्यभिप्रायेणेति । धर्मिणोः कन्धरावृन्तयोर्मुखशतपत्रापेक्षया साधारणधर्मत्वाभिप्रायेण बिम्बप्रतिबिम्बभाव एव, वलि-

१. 'तः । अनयोश्चोपमानोपमेयभावाय' ग. पाठः.

आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः ॥"

अत्र हाराङ्गरागयोर्निर्झरबालातपौ प्रतिबिम्बत्वेन निर्दिष्टौ ॥

**एकस्यैवोपमानोपमेयत्वेऽनन्वयः ॥ १२ ॥**

वाच्याभिप्रायेणात्र पूर्वरूपानुगमः । एकस्य तु विरुद्धधर्मसंसर्गो द्वितीयसब्रह्मचारिनिवृत्त्यर्थः । अत एवानन्वय इति योगोऽप्यत्र[२] सम्भवति । यथा —

"युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रभावो[३]
भीमोऽपि भीम इव वैरिषु भीमकर्मा ।
न्यग्रोधवर्तिनमथाधिपतिं कुरूणा-
मुत्भासनार्थमभिजग्मतुरादरेण[५] ॥"

---

तत्वादिना तयोः सदृशत्वादित्याहुः । पाण्ड्योऽयमित्यादि । प्रथमपक्षेऽदर्शितत्वादुदुदाहरणम् । द्वितीये तु विविक्तत्वेन प्रदर्शनाय ॥

**एकस्यैवे**त्यादि । ननु साधर्म्यादेकस्य भिन्नवस्तुनिष्ठत्वादत्र कथं सम्भवः, अत आह — **वाच्याभिप्रायेणे**ति । एक एवार्थः शब्देन द्विरभिहितो भिन्नवदवभासते । तस्माद् अर्जुनोऽर्जुन इवेत्यादौ एकस्यैवार्जुनस्य शब्दवाच्याकारपर्यालोचनेन भेदावभासात् पूर्वनिर्दिष्टस्य साधर्म्यादिरूपस्यानुगमः सम्बन्धो वेदितव्यः । अन्ये तु पूर्वमुपमानोपमेययोरेकतरप्रतिपादनायोपात्तस्य शब्दरूपस्य पर्यायव्यवच्छेदेन द्वितीयेऽप्यनुगमोऽनुवृत्तिः वाच्याभिप्रायेण वाच्यस्यार्जुनादेः शब्दभेदोपाधिकभेदप्रतिभासापनयनेन वास्तवस्यैकत्वस्य स्फुटप्रतिपत्तिमभिप्रेत्य क्रियत इति द्रष्टव्यम् । एतच्च लाटानुप्रासनिरूपणसमये उक्तमप्यत्रानुस्मारयतीत्याहुः । **विरुद्धधर्मे**ति । उपमानोपमेयत्वाप्राकरणिकत्वप्राकरणिकत्वोत्कृष्टत्वापकृष्टत्वप्रसिद्धत्वाप्रसिद्धत्वलक्षणविरुद्धधर्मसंसर्गः । **द्वितीये**ति । प्रकृता

---

१. 'दम', २ ति । यु', ३ 'हि', ४ तापो भी', ५ 'धि' क ख० पाठः ।

**द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा ॥ १३ ॥**

तच्छब्देनोपमानोपमेयत्वप्रत्ययपरामर्शः। पर्यायो यौगपद्याभावः। अत एवात्र वाक्यभेदः। इयं च धर्मस्य साधारण्ये वस्तुप्रतिवस्तुनिर्देशे च द्विधा। आद्या यथा —

"खमिव जलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥"

द्वितीया यथा —

"सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥"

---

पेक्षया द्वितीयस्य सब्रह्मचारिणो निवृत्त्यर्थः। सदृशव्युदासार्थ इति यावत्। अत एवेति। सदृशान्वयाभावात् ॥

यौगपद्याभावः, न तु शब्दान्तरमेकार्थम्। अत एवेति। पर्यायवृत्तित्वात्। खमिवेत्यादि। अत्र विमलत्वादिधर्मः साधारण्येन प्रतीयते। सच्छायेत्यादि। अत्र सच्छायाम्भोजवदनत्वमेक एव धर्मो वाप्यङ्गनालक्षणसम्बन्धिभेदमात्रभिन्नो वस्तुप्रतिवस्तुभावेन निर्दिश्यते। नन्वत्र वापीपक्षे वदनमिवाम्भोजमित्यर्थः प्रतीयते, अङ्गनापक्षेऽम्भोजतुल्यं वदनमित्युत्तरत्र विपर्ययेण। तत् कथमर्थभेदे सति धर्मस्यैकरूप्यम्। सत्यम्। अभेदाध्यवसायमूलयातिशयोक्त्या धर्मस्यैकरूप्यमध्यवसातव्यम्। अथवा वदनाम्भोजौपम्यलक्षणपरस्परसदृशाभिधायित्वादत्र बिम्बप्रतिबिम्बभावरूपो वस्तुप्रतिवस्तुनिर्देशोऽवगन्तव्यः। यद्वा, परस्परोपमानोपमेयभूताम्भोजवदनलक्षणसंबन्धिभेदादसकृन्निर्दिष्टस्य सच्छायत्वस्य भेदः। तादृशवाप्यङ्गनापेक्षया धर्मभूतयोर्मिथः सादृश्यविशिष्टयोरम्भोजवदनयोर्धर्मिणोर्बिम्बप्रतिबिम्बभावः। अन्ये तु द्वयोरपि वाक्ययोः समानधर्मस्य सकृदुपादाने धर्मस्य साधारण्यम् असकृदुपादाने वस्तुप्रतिवस्तुनिर्देशं चाहुः। तदानीं सच्छायाम्भोजवदना वाप्योऽङ्गना इव, सच्छायवदनाम्बुजा अङ्गना वाप्य इवेत्यन्वयः ॥

---

१ 'तु' क. ग. पाठः. २. 'त्रापि पर्याय' ग. पाठः.

सदृशानुभवाद् वस्त्वन्तरस्मृतिः स्मरणम् ॥ १४ ॥

वस्त्वन्तरं सदृशमेव। अविनाभावाभावान्नानुमानम्। यथा —

"अतिशयितसुरासुरप्रभावं
शिशुमवलोक्य तथैव तुल्यरूपम्।
कुशिकसुतमखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥"

सादृश्यं विना तु स्मृतिर्नायमलङ्कारः। यथा —

"अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम् ॥"

अत्र च कर्तृविशेषणानां स्मर्तव्यदशाभावित्वेन स्मर्तृदशाभावित्वमसमीचीनम्। प्रेयोलङ्कारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिर्विषयः। यथा — 'अहो कोपेऽपि

---

सदृशानुभवादित्यादि। येनकेनचित् सदृशस्य दर्शनाद् यस्य कस्यचित् स्मृतेरलङ्कारत्वेऽतिप्रसङ्गः। अत आह — वस्त्वन्तरमिति। अनुभूयमानेनेति शेषः। सदृशशब्दस्य सम्बन्धिशब्दत्वात्। अविनाभावाभावादित्यादि। नहि सदृशानुभवस्य वस्त्वन्तरस्मृतेश्च व्याप्तिरस्ति। नायमलङ्कार इति। अनलङ्कारोऽलङ्कारान्तरं वा। अनुगोदमित्यादावनलङ्कारः। 'अहो' इत्यादावलङ्कारान्तरम्। अत्रानुगोदमित्यादि। अत्र[1] स्वापस्य स्मृतिः सहचरितदेशदर्शनात्। स्मर्तव्यदशा स्वापावस्था। स्मर्तृदशैतद्वचनप्रयोगसमयः। असमीचीनम् इदानीमविद्यमानत्वात्। प्रेयोऽलङ्कारशब्देनाजितस्मृत्याख्यो व्यभिचार्यर्थपरं प्रत्यङ्गभूत उच्यते।

---

१. 'यै' क ख पाठ. २. 'त्र च स्वा' ख पाठ.

कान्तं मुखमि'ति । तत्रापि विभावाद्यागूरितत्वे, न स्वशब्द-मात्रप्रतिपादितत्वे । यथा — 'अत्रानुगोदमि'त्यादौ ।

"यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि
स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान् दारयन् ।
तेषां दुस्सहकामदेहदहनप्रोद्भूतनेत्रानल-
ज्वालालीभरभासुरे स्मररिपावस्तं गतं कौतुकम् ॥"

इत्यादौ सदृशानुभवेऽप्यशक्यवस्त्वन्तरकरणात्मा विशेषालङ्कारः । करणस्य क्रियासामान्यात्मनो दर्शनेऽपि सम्भवात् । मतान्तरे काव्यलिङ्गमेतत् ॥

तदेते सादृश्याश्रयेणेन भेदाभेदतुल्यत्वेऽलङ्कारा निर्णीताः । सम्प्रत्यभेदप्राधान्ये कथ्यन्ते —

आगूरितत्वे आक्षिप्तत्वे । विभावादिभिर्व्यञ्जितत्व इति यावत् । न स्वशब्देति । व्यभिचारिणां स्वशब्दवाच्यत्वस्य दुष्टत्वात् । अत्र स्मृतेः मुखमालम्बनविभावः, कोपेऽपि कान्तत्वमुद्दीपनविभावः, अहो इत्यादिवचनं वागारम्भानुभावः । यैरित्यादि । ललाटपतितप्रासप्रहारत्वेन ज्वलदलिकविलोचनत्वप्रतियोगिकबिम्बप्रतिबिम्बभाववता सदृशस्य वर्णनीयस्यानुभवेन जन्यस्य कौतुकास्तगमनेन स्वनिमित्ततयाक्षिप्तस्येश्वरज्ञानस्य साक्षात्कारत्वेन विवक्षितत्वान्न स्मृत्यलङ्कारः, अपि तु वक्ष्यमाणस्तृतीयो विशेषप्रकार इत्याह — सदृशानुभवेऽपीत्यादिना । मतान्तर इति । उद्भटादिमते । एवंविधवर्णनीयदर्शनस्येश्वरानुभवहेतुत्वात् काव्यलिङ्गत्वम् । तदुक्तं —

"श्रुतमेकं यदन्यत्र स्मृतेरनुभवस्य वा ।
हेतुतां प्रतिपद्येत काव्यलिङ्गं तदुच्यते ॥"

इति ॥

१. 'अ' क. ख. पाठः २. 'न तु स्व' ग., 'न तु श', ३. 'शवस्त्वन्तराणां', ४. 'त् ॥ सा', ५. 'येण भे' क ख. पाठः ६. 'गिबि' ख. पाठः.

**अभेदप्राधान्य आरोप आरोपविषयानपह्नवे-रूपकम् ॥ १५ ॥**

अभेदस्य प्राधान्याद् भेदस्य वस्तुतः सद्भावः। आरोपोऽन्यत्रान्यावापः। विषयस्य विषय्यवष्टब्धत्वाद् विषयापह्नवेऽपह्नुतिः। अन्यथा तु विषयिणा विषयस्य रूपवतः करणाद् रूपकम्। साधर्म्यं त्वनुगतमेव। यदाहुः—"उपमैव तिरोभूतभेदा रूपकमिष्यत" इति। अरोपादभेदेनाध्यवसायः प्रक्ल्[2]प्यत इति पश्चात् तन्मूलालङ्कारविभागः। इदं च निरवयवं सावयवं परम्परितं[4] चेति प्रथमं त्रिविधम्। आद्यं केवलं मालारूपकं चेति द्विधा। द्वितीयं समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विधैव। तृतीयं तु श्लिष्टाश्लिष्टशब्दनिब-

---

अभेदप्राधान्य इत्यनेनोपमादेर्व्यावृत्तिः, आरोप इत्युत्प्रेक्षादेः, विषयानपह्नव इत्यपह्नुतेः। **आरोप** इत्यादि। अन्यत्र मुखादावन्यस्य चन्द्रादेरावापः निक्षेपः। **विषय्यवष्टब्धत्वादिति**। अवष्टब्धत्वमाक्रान्तत्वम्। असत्त्वापादनमिति यावत्। विषयिणा कमलादिना।—विषयस्य मुखादेः। **रूपवतः करणादिति**। स्वीयकमलादिरूपशालित्वेन करणादित्यर्थः। अनेनैव रूपवन्तं करोतीति रूपवच्छब्दाण्णिचि प्वुलि च रूपयतीति रूपकमिति निरुक्तिरपि दर्शिता। **साधर्म्यं त्वनुगतमेवेति**। एकयोगनिर्दिष्टस्य भेदाभेदतुल्यत्व इत्यस्य निवृत्तावपीति शेषः। **प्रक्लृप्यत इति**। सादृश्यातिशयप्रतीतेः। निरवयवमवयवेभ्यो निष्क्रान्तम्। अवयवरूपणरहितमिति यावत्। सावयवमवयवरूपणयुक्तम्। परम्परितं रूपकपरम्परायुक्तम्। केवलमेकधैव रूपितम्। यत्रैकास्मिन् बहव आरोप्यन्ते तन्मालारूपकम्। समस्तानि रूप्यत्वेनाभिमतानि वस्तूनि स्वशब्दोपात्तानि विषयो यस्य तत् समस्तवस्तुविषयम्। एकदेशे स्वशब्दोपादानाद् विशेषेण वर्तत इत्येकदेशविवर्ति। **श्लिष्टाश्लिष्टेति**।

---

१. 'दभा' क ख पाठः. २. 'क्लृ', ३ 'ति त', ४. 'तन्निति' क. ख. पाठ..

न्धनत्वेन द्विविधं सत् प्रत्येकं केवलमालारूपत्वाच्चतुर्विधम्। तदेवमष्टौ रूपकभेदाः। अन्ये तु प्रत्येकं वाक्योक्तसमासोक्तादिभेदाः सम्भवन्ति। तेऽन्यतो द्रष्टव्याः। क्रमेण यथा —

"दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि! नास्मि दूये।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यद् भिद्यते तव पदं ननु सा व्यथा मे॥"

"पीयूषप्रसृतिर्नवा मखभुजां दात्रं तमोलूनये
स्वर्गङ्गाविमनस्ककोकवदनस्रस्ता मृणालीलता।
द्विर्भावः स्मरकार्मुकस्य किमपि प्राणेश्वरीसागसा-
माशातन्तुरुदञ्चति प्रतिपदि प्रालेयभानोस्तनुः॥"

"विस्तारशालिनि नभस्तलपद्मपात्रे
कुन्दोज्ज्वलग्रभभसञ्चयभूरिभक्तम्।

---

विषयविषयिणोरेकशब्देन शब्दभेदेन चोपादानात्। यत्र विषयविषयिणोर्व्यस्तत्वं तत्र वाक्योक्तं, यत्र पुनस्तयोः समस्तत्वं तत्र समासोक्तम्। आदिशब्देनोभयात्मकादयो गृह्यन्ते। अन्यत भोजादिग्रन्थे।

"समस्त व्यस्तमुभय सविशेषणमित्यपि"

इत्यादिना निर्दिष्टाः। दास इत्यादि। अनेकस्यैव पुलकाङ्कुरस्यैकेनैव कण्टकेन रूपणाद् निरवयवत्वं केवलत्वं च। पुलकाङ्कुरेत्यत्र तु पुलकोद्गमस्याङ्कुरत्वेनाध्यवसायादतिशयोक्तिः। पीयूषेत्यादि। अनेकस्या एव प्रालेयभानुतनोः पीयूषप्रसृत्यादिभिर्बहुभिः सह रूपितत्वान्निरवयवत्वमालात्वे। विस्तारेत्यादि। अत्र भसञ्चयस्यावयविनो भक्तत्वेन नमस्तल-

---

'१. 'न', २ '-', ३ पत्र च द्विविध' ४ 'द्विप्रभ', ५ 'न्ति। अन्य', ६. 'णोरादरण—दा', ७ 'रेर्दुरि', ८ '११' क ग पाठः. ०. 'यो' ग.पाठः.

गङ्गातरङ्गघनमाहिषदुग्धदिग्धं
जग्धं मया नरपते! कलिकालकर्ण! ॥"

"आभाति ते क्षितिभृतः क्षणदानिभेयं
निस्त्रिंशमांसलतमालवनान्तलेखा ।
इन्दुत्विषो युधि हठेन तवारिकीर्त्ती-
रादाय यत्र रमते तरुणः प्रतापः ॥"

क्षितिभृत इत्यत्र श्लिष्टशब्दपरम्परितम् ।

"किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥"

अत्र वक्त्रेन्दुरूपणहेतुकं पीयूषस्याधरामृतेन श्लिष्टशब्देन रूपणम् ।

"विद्वन्मानसहंस! वैरिकमलासङ्कोचदीप्तद्युते!
दुर्गामार्गणनीललोहित! समित्स्वीकारवैश्वानर! ।

गङ्गातरङ्गयोर्गुणभावादवयवभूतयोश्च पत्रपात्रत्वेन माहिषदुग्धत्वेन च रूपितत्वादिदं समस्तवस्तुविषयं सावयवम् । आभातीत्यादि । अत्र निस्त्रिंशस्य तमालवनान्तलेखात्वेन, प्रतापस्य तरुणत्वेन (च) रूपणं शाब्दम् । कीर्त्तीनां नायिकात्वेन रूपणमार्थम् । अत इदमेकदेशविवर्ति । अत्रैव केवलं श्लिष्टशब्दपरम्परितं दर्शयति — क्षितिभृत इति । अत्र निस्त्रिंशस्य तमालवनान्तलेखात्वेन रूपणानिमित्तं वर्णनीयस्य राज्ञः पर्व-(ते ? तत्वे)न श्लिष्टशब्देन रूपणम् । श्लिष्टशब्देनेति । अमृतशब्दस्यो-

१. 'रे' मूलपाठ . २. 'नां', ३ 'ति श्लिष्ट', ४. 'वा', ५. 'न्दृ' क. ख. पाठः.

सत्यप्रीतिविधानदक्ष! विजयप्राग्भावभीम! प्रभो!
साम्राज्यं वरवीर! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥"

अत्र त्वमेव हंस इत्याद्यारोपणपूर्वको मानसमेव मानसमित्याद्यारोप इति श्लिष्टशब्दमालापरम्परितम् ।

"यामि मनोवाक्कायैः शरणं करुणात्मकं जगन्नाथं!।
जन्मजरामरणार्णवतरणतरण्डं तवाङ्घ्रियुगम् ॥"

"पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो
भग्नप्रत्यर्थिवंशोल्बणविजयकरिस्त्यानदानाम्बुपट्टः ।
सङ्ग्रामत्रैस्तुताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः
खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥"

---

त्कृष्टरससुधारसलक्षणोभयार्थवृत्तित्वात् । त्वमेवेत्यादि । ज्ञप्त्यपेक्षया हंसत्वारोपं मानसत्वारोपे निमित्तं ब्रुवतो मङ्खुकस्य उत्पत्त्यपेक्षया मानसत्वाद्यारोपं हंसत्वाद्यारोपे निमित्तं वदतः काव्यप्रकाशकारस्य च न विरोधः । श्लिष्टशब्दमालापरम्परितमिति । मानसशब्दो मनस्सरोविशेषयोर्वर्तते, कमलासङ्कोचशब्दो लक्ष्म्याः सङ्कोचे कमलानामसङ्कोचे च, दुर्गामार्गणशब्दो दुर्गाणाममार्गणे दुर्गाया मार्गणे च, समितिस्वीकारशब्दः सङ्ग्रामे समितां च स्वीकारे, सत्यप्रीतिशब्दः सत्ये प्रीतौ सत्यां देव्यामप्रीतौ च, विजयशब्दः शत्रुपराभवेऽर्जुने चेति श्लिष्टत्वम् । दोसधुतिदक्षभीमशब्दानां संज्ञाव्यतिरेकेणार्थान्तरमनाश्रयणीयम् । उभयोरपि रूपकयोः श्लिष्टत्वे कस्य किं निमित्तं स्यात्, प्रक्रमभेदप्रसङ्गश्च । एकस्यैव वर्णनीयस्य बहुभिर्हंसादिभिः सह रूपितत्वान्मालात्वम् । यामीत्यादि । अत्राङ्घ्रियुगस्य तरण्डत्वारोपे हेतुर्जन्मादेरर्णवत्वारोपः । अङ्घ्रियुगस्यैकेनारोप्येन रूपितत्वाच्च केवलत्वम् । पर्यङ्क इत्यादि । भग्नप्रत्यर्थिवंशत्वादुल्बणो विजय एव करी तस्य स्त्यानदानाम्बुपट्टः । अत्र क्ष्मासौविदल्ल

---

१ 'शब्द' ख ग पाठः २ 'यम' क पाठः ३ 'क' ख ग पाठः
४ 'नाशना', ५ 'दुःख', ६ 'मान ... ह' ग पाठः

अत्र क्षमासौविदल्ल इति परम्परितमप्येकदेशविवर्ति । एवमादयो[1]ऽपि भेदाः लेशतः सूचिता एव । इदं च वैधर्म्येणापि दृश्यते । यथा —

"सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषा च[2] दुराशया कलियुगे राजावली सेविता
ते[3]षां शूलिनि भक्तिमात्रसुलभे से[4]वा कियत् कौशलम् ॥"

अत्र चारोप्यमाणस्य धर्मित्वादाविष्टलिङ्गसङ्ख्यत्वेऽपि क्वचित्

---

इत्यादि । एतद् राजलक्ष्म्याः पर्यङ्क इत्यत्राप्युपलक्षणम् । **एवमादयोऽपीति** । यथा सावयवं समस्तवस्तुविषयैकदेशविवर्तित्वाभ्यां भिद्यते, तथा परम्परितमपि । तत्रैकदेशविवर्ति दर्शितम् । पौरुषाब्धेस्तरङ्गः खड्ग इत्यादौ समस्तवस्तुविषयम् । श्लिष्टशब्दनिबन्धने त्वेकदेशविवर्तित्वमेव । तदुक्तं —

"यद्वैकदेशवर्ति स्यात् पररूपेण रूपणात्"

इति । **वैधर्म्येणापीति** । पौरुषाब्धेस्तरङ्गः खड्ग इत्यादौ श्यामत्वादिना मिथः सदृशखड्गतरङ्गसम्बन्धेन पौरुषाब्ध्योः, महत्त्वादिना मिथः सदृशपौरुषाब्धिसम्बन्धेन खड्गतरङ्गयोश्च साधर्म्यम् । सौजन्याम्बुमरुस्थली राजावलीत्यत्र हेयत्वेनोपादेयत्वेन च मिथः सदृशयोः मरुस्थलीराजावल्योः सौजन्याम्बुनोश्च परस्परसम्बन्धाभावेन वैधर्म्यम् । एवं सुचरितालेख्येत्यादौ च । रूपकस्य वाक्योक्तादित्वे यथा —

"यद्याकाङ्क्षसि वीक्षितुं गुणरुचे ! चेतः समस्तान् गुणान्
कोलम्बास्यमुपेहि दक्षिणदिशासीमन्तरत्नं पुरम् ।
आस्ते यत्र भुजेन कीर्त्तिशशिनः पूर्वाचलेनोद्वह-
न्नुर्वीमर्णवमेखलां यदुपतिः कल्पद्रुमो जङ्गमः ॥"

अत्र सीमन्तरत्नं पुरमिति वाक्योक्तम् । अर्णवमेखलामिति समासोक्तम् ।

---

१. 'यो भे' ख. पाठ. २. 'ष' ३ 'सेवा श', ४. 'तेषा कि' क. ख पाठः ५. 'त्यादौ' ख पाठ-

स्वतोऽसम्भवत्सङ्ख्यायोगस्य विषयसङ्ख्यत्वं प्रत्येकमारोपात्। यथा—"क्वचिद् जटावल्कलावलम्बिनः कपिला दावाग्नय" इत्यादौ। नहि कपिलमुनेर्बहुत्वम्।

"भ्रमिमरतिमलसहृदयतां
　　प्रलयं मूर्छां तमः शरीरसादम्।
मरणं च जलदभुजगजं
　　प्रसह्य कुरुते विषं वियोगिनीनाम्॥"

इत्यत्र नियतसङ्ख्याककार्यविशेषोत्थापितगरलार्थप्रभावितो विषशब्दे श्लेष एव जलदभुजगजमिति रूपकसाधक इति

---

कीर्तिशशिनः पूर्वाचलेनेै भुजेनेत्युभयात्मकम्। कल्पद्रुमो जङ्गम इति विशिष्टम्। **आरोप्यमाणस्य धर्मित्वादित्यादि**। धर्मस्यारोपे निमीलितानि कुसुमानीत्यादौ विषयनिघ्नत्वं भवत्येव। स्वतोऽसम्भवत्सङ्ख्यायोगस्य आरोपमन्तरेणासम्भवाद् विषयगतसङ्ख्याविशेषयोगस्य। अयमर्थः—यद्यपि रूपके विषयिणो लिङ्गनियमवत् सङ्ख्यानियमोऽपि प्राप्तः, तथापि प्रतिविषयमारोपितत्वेन भेदावसायादेकस्यैव विषयिणोऽनेकत्वं युज्यते। कपिला दावाग्नय इत्यत्र श्लेषदर्शनात् श्लेषविषयमेतदिति न मन्तव्यम्। रथस्पादनखचन्द्राणामित्यादावश्लेषेऽपि दर्शनात्। समुदायारोपविवक्षायां तु विषयबहुत्वेऽपि विषयिण एकत्वमेव। यथा—'प्राणास्तृणमि'ति। **नहि कपिलमुनेरिति**। स्वत इति शेषः। **भ्रमिमित्यादि**। जलदभुजगजं विषमित्यत्र श्लिष्टशब्दपरम्परितशङ्काव्युदासाय श्लेषस्य रूपकनिरपेक्षं रूपकस्य श्लेषसापेक्षत्वं चाह—**नियतसङ्ख्याकेति**। गरलवर्तिभ्रम्यादिकार्यविशेषाष्टकेनैव विषशब्दस्य सलिलगरललक्षणोभयार्थाभिधायित्वप्रतीतिः, न तु जलदस्य भुजगत्वरूपणेनेति श्लेषस्य रूपकनिरपेक्ष्यं द(र्शयितुं ? र्शितम्।) रूपकसाधक इति। अन्यथोपमारूपकयोः

---

१. 'वा' क. ख पाठः. २. 'नेत्यु' ग घ. पाठः. ३. 'ष', ४. 'रूपकं' ख. पाठः.

पूर्वसिद्धत्वाभावाद् न तन्निबन्धनं विषशब्दे श्लिष्टशब्दपरम्परितामिति श्लेष एवात्रेत्याहुः ॥

**आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ॥ १६॥**

आरोप्यमाणं रूपके प्रकृतोपयोगित्वाभावात् प्रकृतोपरञ्जकत्वेनैव केवलेनान्वयं भजते । परिणामे तु प्रकृतात्मतयारोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणरूपत्वेन परिणमति । आगमानुगमविगमख्यात्यसम्भवात् साङ्ख्यीयपरिणामवैलक्षण्यम् । तस्य च सामानाधिकरण्यवैयधिकरण्याभ्यां द्वैविध्यम् । आद्यो यथा—

"तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय ।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानस्त्वरितमथ गिरिं चित्रकूटं प्रतस्थे ॥"

---

सन्देहलक्षणः सङ्करः स्यात् । पूर्वासिद्धत्वाभावादिति । श्लेषप्रतीतिमन्तरेण सन्दिग्धत्वात् । तन्निबन्धनमिति । रूपकनिबन्धनम् ॥

प्रकृतोपयोगित्व इति । प्रस्तुतकार्योपयोगित्वे । प्रकृतोपरञ्जकत्वेनेति । प्रकृते मुखादौ स्वगतकान्त्यादिसमर्पणेन । केवलेनेत्यनेन तादात्म्यं व्यवच्छिनत्ति । उपयोग इति । प्रस्तुतकार्ये तरणादौ । परिणमतीति । अन्यथा प्रस्तुतकार्यानिष्पत्तेः । घटरूपेण परिणताया मृद उदकाहरणक्षमता । आगमेत्यादि । यथा मृत्परिणामे घटे तस्य मृत्सकाशादागतत्वं घटावस्थायामपि मृद्रूपानुगमः कालान्तरे मृदि विलयश्च प्रतीयते, नैवं मैत्रीपरिणाम आतरे । सामानाधिकरण्येति । विषयविषयिणोरेकविभक्तित्वेन सामानाधिकरण्यं, भिन्नविभक्तित्वे वैयधिकरण्यम् ।

१ 'न नि' ग प. २ 'रूप'. ३ 'वैव्या' क ख पाठः. ४ 'भयो' मूलपाठ

अत्र सौमित्रिमैत्री प्रकृता आरोप्यमाणसमानाधिकरणातररूपत्वेन परिणता। आतरस्य मैत्रीरूपतया प्रकृत उपयोगात्। तत्र यथा समासोक्तावारोप्यमाणं प्रकृतोपयोगि तच्चारोपविषयात्मतया स्थितम्। अत एव तत्र व्यवहारसमारोपः, ननु रूपसमारोपः। एवमिहापि ज्ञेयम्। केवलं तत्र विषयस्यैव प्रयोगः। विषयिणो गम्यमानत्वात्। इह तु द्वयोरप्यभिधानं, तादात्म्यात् तु तयोः परिणामित्वम्। द्वितीयो यथा —

अत्र सौमित्रिमैत्रीत्यादि। वर्णनीयत्वेन प्रस्तुता सौमित्रिमैत्री। प्रकृते उपयोगादिति। नौसाधने नदीतरणेऽपेक्षितत्वात्। अत्र चोदाहरणे मैत्रीमयमित्यत्र मयटः प्रयोग आरोपस्य दुर्घटत्वादयमिति विच्छिद्यायमसाविस्यन्वयमिच्छन्ति केचित्। एवंविधश्च निर्देशः प्रायेणाव्यवहित एव दृश्यत इतीदं सर्वथा न निरवद्यम्। तत् तु यथा —

प्रतिभटविजयाय प्रस्थितस्याग्रयायी
प्रलयदहनरूक्षो यादवेन्द्र! प्रतापः।
समजनि भुजशौर्यं वर्म खड्गः सहायः
सनेति विहरतस्ते साक्षिणी वीरलक्ष्मीः॥

अत्र प्रतापभुजशौर्यादयः समानाधिकरणाग्रयायिवर्मादिरूपेण परिणमन्तः शत्रुविजयहेतौ समरकार्य उपयुज्यन्ते। रूपकात् परिणामस्य व्यावृत्तिं दर्शयितुं सम्प्रतिपन्नरूपकव्याख्यया समासोक्त्या किञ्चित् साम्यमाह — तत्र यथेत्यादिना। तत्र आरोपमार्गे। आरोप्यमाणम् उपोढरागेणेत्यादौ नायकादि। प्रकृतोपयोगीति। मुखग्रहणादौ नायकादेरेवोचितत्वात्। आरोपविषयात्मतया निशाशश्याद्यात्मतया। अत एव तादात्म्यादेव। तत्र समासोक्तौ। एवमिहापीति। यथा समासोक्तौ विषयविषयितादात्म्येन रूपकाद् भेदः, एवमिह परिणामेऽपि रूपकाद् भेदो ज्ञातव्य

१ 'तत्र, २ 'या नत्र ...', ३ 'प, ए', ४. 'इ इ', ५. 'म' क. ख. पाठः

"अथ पक्किमतामुपेयिवद्भिः सरसैर्वक्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरङ्गमाद्यैः ॥"

अत्र राजसङ्घटने उपायनमुचितम् । तच्चात्र वचोरूपमिति वचसां व्यधिकरणोपायनरूपत्वेन परिणामः ॥

**विषयस्य सन्दिह्यमानत्वे सन्देहः ॥ १७ ॥**

अभेदप्राधान्ये आरोप इत्येव । विषयः प्रकृतोऽर्थः, यद्भित्तित्वेनाप्रकृतोऽर्थः सन्दिह्यते । अप्रकृतसन्देहे प्रकृतोऽपि सन्दिह्यत एव । तेन प्रकृताप्रकृतगतत्वेन कविप्रतिभोत्थापिते सन्देहे सन्देहालङ्कारः । स च त्रिविधः । शुद्धो निश्चयगर्भो निश्चयान्तश्च । शुद्धो यत्र संशय एव पर्यवसानम् । यथा —

"किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा मञ्जरी
वेलाप्रोच्चलितस्य किं लहरिका लावण्यवारांनिधेः ।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥"

---

इत्यर्थः । तर्हि समासोक्तिपरिणामयोः को भेद इत्यत्राह — केवलमिति । पक्किमतां पचेलिमत्वम् । राजसङ्घटन इत्यादिना प्रकृतोपयोगित्वं दर्शयति ॥

इत्येवेति । अनुवर्तत इत्यर्थः । विषयस्येत्यनेनारोपस्य विषयो निर्दिश्यते, न सन्देहस्येत्याह — विषयः प्रकृतोऽर्थ इति । यद्भित्तित्वेन यदाश्रयत्वेन । अप्रकृत इन्द्वादिर्विषयी । प्रकृतोऽपीति । सन्देहस्य कोटिद्वयाधिष्ठानत्वात् । फलितं दर्शयति — तेनेति । प्रतिभोत्थापित इत्यनेन स्थाणुर्वा पुरुषो वेति स्वरसप्रवृत्तस्य सन्देहस्यालङ्कारत्वं

१ 'दि: ॥ रा', २ 'न म', ३ 'घ त्रि', ४ 'सरभमोद्भि' क. ग. पाठः. ५. 'च्छ' ग. पाठः.

निश्चयगर्भो यः संशयोपक्रमो निश्चयमध्यः संशयान्तः । यथा —

"अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुरः
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥"

निश्चयान्तो यत्र संशयोपक्रमो निश्चये पर्यवसानम् । यथा—

"इन्दुः किं क कलङ्कः
सरसिजमेतत् किमम्बु कुत्र गतम् ।
ललितसविलासवचनै-
र्मुखमिति हरिणाक्षि ! निश्चितं परतः ॥"

कचिदारोप्यमाणानां भिन्नाश्रयत्वेऽपि दृश्यते । यथा —

"रञ्जिता नु विविधास्तरुशैला
नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री
संहृता नु ककुभस्तिमिरेण ॥"

अत्रारोपविषये तिमिरे रागादि तर्वादिभिन्नाश्रयत्वेनारोपितम् ।

निराकरोति । संशय एवेत्येवकारेण निश्चयगन्धमपि निवर्तयति । अय-मित्यादि । अयं मार्तण्डः किमिति संशयः । स खलु तुरगैः सप्तभिरित इत्येकतरकोटिभेदकधर्मिनिर्देशाद् यद्यपि भेदः समुन्मिषति, तथापि वर्ण्-नीयस्यासाधारणधर्मानिर्देशादयमसावेवेत्यर्थप्रतिपत्तेरभावान्ते सन्देह एवावति-ष्ठते । एतच्च विकल्पान् विदधतीत्यनेन कविनैव दर्शितम् । इन्दुः कि-मित्यादि । पूर्वार्धे सन्देहः । उत्तरार्धे निर्णयः । रञ्जिता इत्यादि ।

१. 'मे' क. पाठः. २. 'त्यपि प्र'ग पाठः.

केचित्तु अध्यवसायात्मकत्वेनेमं सन्देहप्रकारमाहुः। अन्ये तु नुशब्दस्य सम्भावनाद्योतकत्वं मत्वोत्प्रेक्षाप्रकारमिममाचक्षते॥

**सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्॥ १८॥**

असम्यग्ज्ञानत्वसाधर्म्यात् सन्देहानन्तरमस्य लक्षणम्। भ्रान्तिश्चित्तधर्मो विद्यते यस्मिन् भणितिप्रकारे स भ्रान्तिमान्। सादृश्यप्रयुक्ता च भ्रान्तिरस्य विषयः। यथा—

"ओष्ठे बिम्बफलाशयालमलकेपूत्पाकजम्बूधिया
कर्णालङ्कृतिभाजि दाडिमफलभ्रान्त्या च शोणे मणौ।
निष्पत्यासकृदुत्पलच्छददृशामाचक्रमाणां मरौ
राजन्! गूर्जरराजपञ्जरशुकैः सद्यस्तृपा मूर्छितम्॥"

गाढमर्मप्रहारादिकृतौ तु भ्रान्तिर्नास्यालङ्कारस्य विषयः। यथा—

आदिशब्देन नमनस्थगनपूरणसंहरणानि गृह्यन्ते, तर्वादीत्यादिशब्देन गगनधरित्रीककुभः। अत्र व्योम्नुवत् तिमिरं विषयः। रञ्जनादिर्धर्मो विषयी। कञ्चित्त्वित्यादि। अत्र तिमिरकर्तृकस्य तरुशैलादिव्यापनस्य विषयत्वमङ्गीकृत्य तस्य च रञ्जनादिना विषयिणा निगीर्णत्वादत्राध्यवसायता। तिमिरस्य विषयत्वे तूभयोरप्युक्तेरारोपत्वम्। अन्ये त्विति। तिमिरं विषयः रञ्जनादिक्रिया विषयो व्यापनं क्रियारूपं निमित्तं गम्यते। अतो गम्यमानक्रियानिमित्ता क्रियास्वरूपोत्प्रेक्षेयम्॥

वस्त्वन्तरप्रतीतिरिति। वस्त्वन्तरानुभवः। अनेन स्मरणव्यावृत्तिः। चित्तधर्म इति। सकलवृत्तिज्ञानानां चित्तवृत्तिधर्मविशेषत्वात्। सादृश्यप्रयुक्ता च भ्रान्तिरिति भ्रान्तेर्विशेषणस्य व्यावर्त्यं दर्शयति—गाढ-

१ '[illegible]', २ '[illegible]दुर्गे', ३ 'यं', ४ 'ता शा' क. ख. पाठः. ५ 'भ्रा' ख पाठः ६ '[illegible]' क पाठः

"दामोदरकराघातचूर्णिताशेषवक्षसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥"

सादृश्यहेतुकापि भ्रान्तिर्विच्छित्त्यर्थं कविप्रतिभोत्थापितैव गृह्यते । यथोदाहृतौ । न स्वरसोत्थापिता शुक्तिकारजतवत् । एवं स्थाणुर्वा स्यात् पुरुषो वेति संशयेऽपि बोद्धव्यम् ॥

**एकस्यापि निमित्तवशादनेकधा ग्रहण उल्लेखः ॥ १९ ॥**

यत्रैकं वस्त्वनेकधा गृह्यते स रूपबाहुल्योल्लेखनादुल्लेखः । न चानिमित्तमुल्लेखमात्रम्, अपितु नानाविधधर्मयोगित्वाख्यनिमित्तवशादेतत् क्रियते । तत्र च रुच्यर्थित्वव्युत्पत्तयो यथासंभवं प्रयोजिकाः । तदुक्तं —

"यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते ।
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधितः ॥"

इति । उदाहरणं —

---

मर्मेत्यादिना । विच्छित्त्यर्थमिति । अलङ्कारजन्या शोभा विच्छित्तिः । पूर्वं 'कविप्रतिभोत्थापितः सन्देह' इति सूचितमर्थं प्रसङ्गेन विशदयति— एवमित्यादिना ॥

एकस्येत्यादि । अनेकधा अनेकप्रकारम् । तच्च प्रकारानेकत्वं रूपनानात्वेन विषयनानात्वेन च भवति । रूपनानात्वं च सर्वत्रैकरूपम् । विषयनानात्वं कारकवैचित्र्येण विचित्रम् । रूपबाहुल्योल्लेखनादित्यनेनोल्लेखं निर्वक्ति । न चानिमित्तमित्यादिना सूत्रस्थं निमित्तवशादित्येतत् पदं व्याचष्टे । रुच्यर्थित्वेति । रुचिः सार्वकालिकीच्छा । अर्थित्वं तात्कालिक्यपेक्षा । यथासम्भवमित्यनेन रुच्यादीनां यौगपद्यानियमं दर्शयति । यथारुचीत्यादि । एकस्मिन्नप्यर्थे आभासो ज्ञानमनुसन्धानसाधितः सन् रुच्यादिवशात् भिद्यत इत्यर्थः । अनुसन्धानं नाम बहूनां विशेषाणां गुण-

१ 'यथोदितं न' ग. पाठः २ 'तं' क. पाठः ३ 'तत् । स्था', ४. 'वा स्यादिति', ५ 'मे', ६. 'त्य', ७ 'त्य नि' क. ग. पाठः ८ 'यथारम' ग. पाठः. ९. 'रप', १० 'योग्य', ११. य क. ख. पाठः. १२ 'र्थः । तथ' ग. घ. पाठः.

"यस्तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः, स-ङ्गीतशालेति लासकैः" इत्यादि श्रीकण्ठाख्यजनपदवर्णने । अत्र ह्येक एव श्रीकण्ठ[2]जनपदस्तत्तद्गुणयोगात् तपोवनाद्य-नेकरूपतया निरूपितः । रुच्यर्थित्वव्युत्पत्तय[3]श्चात्र प्रायशः समस्ता व्यस्ता वा योजयितुं शक्यन्ते । नन्वेतन्मध्ये "वज्र-पञ्जरमिति शरणागतैरसुरविवरमिति वादिकैः" इत्यादौ[4] रूप-कानुप्रवेशात् कथमयमुल्लेखालङ्कारविषयः । सत्यम् । अस्ति तावत् "तपोवनम्" इत्यादौ रूपक[5]विविक्तोऽस्य विषयः । यत्र वस्तुतस्तद्रूपतायाः सम्भवः, यत्र तु[6] रूपकं स्थितं, तत्र चेदियमपि भङ्गिः सम्भविनी, तत् सङ्करोऽस्तु । नैतावतास्या-भावः शक्यते वक्तुम् । ततश्च न दोषः कश्चित् । एवं तर्हि तत्र[7] विषये भ्रान्तिमदलङ्कारोऽस्तु । अतद्रूपस्य तद्रूपताप्रती-तिनिबन्धनत्वात् । नैतत् । अनेकधाग्रहणाख्यस्यातिशय-

प्रधानतया व्यामिश्रणेन विमर्शनम् । तत्तद्गुणयोगादिति । तपोव-नादिनिष्ठविविक्तत्वरमणीयत्वादिगुणयोगात् । समस्ता व्यस्ता चेति । तपोवनादौ प्रत्येकं मुनिप्रभृतीनां रुच्यादित्रयमपि सम्भवतीति सम-स्तत्वम् । मुनीनां रुचिर्वेश्यानामर्थित्वं लासकानां व्युत्पत्तिरिति व्यवस्थया व्यस्तत्वम् । यत्र वस्तुत इति । ननु यदि श्रीकण्ठस्य तपोवनादिरूपं वास्तवं, तर्हि कथमुल्लेखस्यारोपगर्भत्वम् । उच्यते । मुनिप्रभृतिभिरन्य-योगव्यवच्छेदेन श्रीकण्ठस्तपोवनादिरूपतया प्रतीयते । तत्र रूपान्तर-स्यापि विद्यमानत्वादारोपणीयमेव । अथवा तपोवनादीनां नियतदेशवर्ति-त्वेऽपि भूयस्त्वविवक्षया सकल एव श्रीकण्ठस्तपोवनादितया व्यपदिश्यत इत्यारोपो द्रष्टव्यः । सङ्करोऽस्त्विति । एकवाचकानुप्रवेशलक्षणः । तत्र विषय इति । उल्लेखविषये तपोवनमित्यादौ । अतद्रूपस्येत्यादि ।

१. 'ज्ज', २. 'ण्ठस्त', ३. 'योऽत्र', ४. 'दिरूपकालङ्कारयोग इति क', ५. 'कालङ्कारवि', ६. 'च', ७. 'द्वि' क. ग. पाठः. ८. 'कर' ख. ग. पाठः.

स्यापूर्वस्य भावात् । तद्धेतुकत्वाच्चास्यालङ्कारस्य । सङ्करप्रतीतिरत्वङ्गीकृतैव । यद्येवमभेदे भेद इत्येवंरूपातिशयोक्तिरत्रास्तु । नैष दोषः । ग्रहीतृभेदाख्येन विषयविभागेनानेकधात्वोट्टङ्कनात्, तस्य च विच्छित्त्यन्तररूपत्वात् सर्वथा नास्यान्तर्भावः शक्यक्रिय इति निश्चयः । यथा वा —

"णाराअणो त्ति परिणअवहूहि सिरिवळ्ळहो त्ति तरुणीहिं ।
बाळाहिं उण कोऊहळेण एँअमे अ सच्चविओ ॥"

---

अतदेकरूपस्य तदेकरूपतया, अवयवधर्मस्य तपोवनत्वादेः समुदायधर्मतया वा प्रतीतेः प्रवर्तमानत्वात् । सङ्करप्रतीतिरित्वति । 'तपोवनमिति मुनिभिरि'त्यादीनामेकैकशो निरूपणे भ्रान्तिमतः प्रादुर्भावः संहत्य निरूपणे पुनरेकस्यानेकधात्वोल्लेखनादुल्लेखस्येति पूर्ववत् सङ्करप्रतीत्यङ्गीकारः । यद्येवमभेद इत्यादि । यथा—'मग्गिअळद्धम्मि' इत्यादावेकस्याधररसस्य 'अण्णण्णा' इत्यनेकधात्वस्फुरणादतिशयोक्तित्वम् । ग्रहीतृभेदाख्येनेति । ननु न खलु ग्रहीतृभेदः प्रयोजकः, 'गुरुर्वचसी'त्यादावदर्शनात् । अतो विषयभेदमात्रं प्रयोजकत्वेनोदाहरणीयम् । तच्च मार्गितलब्धत्वादिरूपमतिशयोक्त्युदाहरणेऽपि विद्यते । तत्र ग्रन्थकृतैवोक्तं — 'विषयविभागाद् भेदोपनिबन्ध' इति । तत् कथमेतत् । अत्र केचिदाहुः — तत्रान्येऽन्य इति रसस्य भेदमात्र निर्दिष्ट, न तु तत्तद्रूपोपादानेन । इह तु तपोवनादिरूपविशेषोपादानेनेत्यदोष इति । अन्ये तु रसभेदविषयभूताना मार्गितलब्धत्वादीनामेकस्यैवाधररसस्य विशेषणतयोपसर्जनीकृतत्वात् तत्र विषयभेदो न स्फुट इत्याहुः । नारायणेत्यादि ।

नारायण इति परिणतवधूभिः श्रीवल्लभ इति तरुणीभिः ।
बालाभिः पुनः कौतूहलेनैवमेव दृष्टः ।'

अत्र परिणतवधूनां रुचि, तरुणीनां 'श्रियः कामिनकामिन्य' इति न्यायेनार्थित्वं, बालाना तावन्मात्रस्यैव ज्ञानाद् व्युत्पत्तिः । अत्र नामान्तरव्य-

१. 'रत' म पाठ. २ 'ग्रहीतृभेदस्य', ३ 'था — णा', ४ 'एमे' क. ग. पाठ. ५ 'कल्पयति' ग पाठ. ६ 'दृष्ट' ग घ पाठ.

एवं "गुरुर्वचसि पृथुरुरसि विशालो मनस्यर्जुनो यशसि" इत्यादाववसेयम् । इयांस्तु विशेषः — पूर्वत्र ग्रहीतृभेदेनानेकधात्वोल्लेखः, इह तु विषयभेदेन । नन्वयं श्लेषालङ्कारविषय इति कथमलङ्कारान्तरमत्र स्थाप्यते । सत्यम् । अनेकधात्वनिमित्तं तु विच्छित्त्यन्तरमत्र दृश्यत इति तत्प्रतिभोत्पत्तिहेतुः श्लेषोऽप्यत्र स्याद्, न तु सर्वथा तदभावः। अतश्चालङ्कारान्तरं, यदेवंविधे विषये श्लेषाभावेऽपि विच्छित्त्यन्तरसम्भवः। यथा — 'युधिष्ठिरः सत्यवचसि' इत्यादि । तस्मादेवमादावुल्लेख एव श्रेयान् । एवं कारकान्तरविच्छित्त्याश्रयेणेनायमलङ्कारो निदर्शनीयः ॥

---

वच्छेदपरतयारोपगर्भत्वम् । रूपभेदवद् नामभेदेनाप्युल्लेखो भवतीति प्रदर्शनायोदाहरणान्तरोपन्यासः — गुरुर्वचसीत्यादि । अत्र गुर्वादिशब्दप्रतिपादितानां गौरवादीनां बृहस्पतित्वादीनां च श्लेषमूलयातिशयोक्त्या भेदाध्यवसायेन वास्तवत्वमारोपितत्वं च द्रष्टव्यम् । विषयभेदेनेति । ग्रहीतृव्यतिरिक्ताधिकरणरूपविषयभेदेनेत्यर्थः । तत्प्रतिभा उल्लेखप्रतिभा । एवं च यद्यपि श्लेषस्यैवोन्मज्जनप्रसङ्गः, तथापि "कुपतिमपि कलत्रवल्लभमि"त्यादौ विरोधवदस्याप्यङ्गीकरणीयत्वमिति भावः । अतश्चेति । वक्ष्यमाणादपि हेतोः। युधिष्ठिरः सत्यवचसीत्यादि । ननु कथमत्रोल्लेखता, युधिष्ठिरत्वादेर्वास्तवत्वाभावात् । अत्र केचिदाहुः — यदेवंविधे विषय इत्यादिग्रन्थकृतो गुरुर्वचसीत्यादिवचनभङ्गीषु श्लेषव्यतिरेकेणालङ्कारान्त(रं तत्स ? रस)द्भावप्रदर्शन एव तात्पर्यम् । ततश्च यथा युधिष्ठिरः सत्यवचसीत्यादौ रूपकैलक्षणविच्छित्त्यन्तरस्वीकारः, एवं गुरुर्वचसीत्यादावुल्लेखोऽपि स्वीकरणीय इति । एवं कारकान्तरविच्छित्त्येति । अत्र कारकग्रहणं विभक्तिमात्रस्योपलक्षणम् । अकारकविभक्तिष्वपि विषयभेदे-

---

१. 'प ह', २. 'रं स्था', ३ 'त्तिस', ४. 'वमलङ्कारान्त', ५. 'येणाय' क. ख. पाठः ६. 'वस्या' ख. पाठः. ७. 'स्याङ्गी' क. पाठ. ८. 'राणां सद्रा', ९. 'कचि' ख. पाठः.

## विषयापह्नवेऽपह्नुतिः ॥ २० ॥

वस्त्वन्तरप्रतीतिरित्येव । प्रक्रान्तानपह्नववैधर्म्येणेद-मुच्यते। आरोपप्रस्तावादारोपविषयापह्नुतावारोप्यमाणप्रतीता-

---

ननेकधात्वोल्लेखस्य सम्भवात् । तत्र सप्तम्यामुदाहृतम्। षष्ठ्यां यथा—

परदाराणामन्धो यदुनृप! शुद्धान्तयोषितां सुभगः ।
त्वं सहृदयः कवीनामप्राज्ञो दोषदर्शिनां चासि ॥

पञ्चम्यां यथा—

सङ्ग्रामधीरनृपतिर्भीरुरधर्माद्भीरुराहवतः । .
शुश्रूषुर्निगमविदस्तद्बाह्यविदो भवत्यशुश्रूषुः ॥

चतुर्थ्यां यथा—

प्रतिपन्नाय नृशंसः कारुणिकस्तिष्ठते विपन्नाय।
अभ्यर्थिने वदान्यो वाग्मी विदुषे च रविवर्मा ॥

तृतीयायां यथा—

कुवलयविकासविधिना राजा यदुनाथ! तेजसा भास्वान् ।
त्वं विक्रमेण वलिजित् सर्वज्ञतया गिरीशश्च ॥

द्वितीयायां यथा—

बालिशमविशेषज्ञो नन्दयति विपश्चितं विशेषज्ञः ।
अपकारिणं कृतघ्नो यदुपतिरुपकारिणं कृतज्ञश्च ॥

प्रथमायां यथा—

सख्या यदुपते! सन्तो गुरवः प्रश्रितेन च ।
नीतास्त्वया परा तृप्तिमास्तिकेन च देवताः ॥

**विषयापह्नव** इति। विषयग्रहणेन निश्चयगर्भनिश्चयान्तयोः विषय्यपह्नववतोः सन्देहयोर्व्यावृत्तिः । अपह्नवोऽपलापः । विषयापह्नवसद्भावमात्रे नायमलङ्कार इत्याह—**वस्त्वन्तरप्रतीतिरिति** । भ्रान्तिमत्सूत्रादनुवर्तत इति भावः । **प्रक्रान्तेति** । रूपकमारभ्य यावदुल्लेखं प्रक्रान्तविषयानपह्नववैधर्म्येण विरोधसम्बन्धादस्येह प्रस्तावः । इदमपह्नुत्यलङ्करणम् । यद्यपि विषय इति वस्त्वन्तरेति च सामान्येन निर्दिष्टं, तथापि प्रकरणाद्

त्रपह्नुत्याख्योऽलङ्कारः। तस्य च त्रयी बन्धच्छाया — अपह्नवपूर्वक आरोपः। आरोपपूर्वकोऽपह्नवः। छलादिशब्दैरसत्यत्वप्रतिपादकैर्वापह्नवनिर्देशः। पूर्वकभेदद्वये वाक्यभेदः। तृतीयभेदे त्वेकवाक्यत्वम्। आद्यो यथा —

"यदेतच्चन्द्रान्तर्जलदलवलीलां[2] वितनुते
तदाचष्टे लोकः शश इति न तन्मां प्रति तथा।
अहं त्विन्दुं मन्ये त्वदरिविरहक्लान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्॥"

अत्र त्वेन्दवस्य शशस्यापह्नव उपक्षिप्ते शशकप्रतिवस्तुकिणवत इन्दोरारोपो नान्वयघटनां पुष्यतीति न निरवद्यत्वम्। तत्तु यथा —

"पूर्णेन्दो[3]रतिपोषकान्तवपुषः स्फारप्रभाभासुरं
नेदं मण्डलमभ्युदेति गगनाभोगे जिगीषोर्जगत्।
मारस्योच्छ्रितमातपत्रमधुना पाण्डु प्रदोषश्रिया
मानोन्नद्धजनाभिमानदलनोद्योगैकहेवाकिनः॥"

विशेपलाभ इत्याह — आरोपप्रस्तावादित्यादि। त्रयीति। त्र्यवयवा त्रिप्रकारेत्यर्थः। वाक्यभेद इति। एकस्मिन् वाक्ये आरोपस्यापह्नवस्य च द्वयोर्विधातुमशक्यत्वात्। तृतीयभेदे छलादिशब्दप्रयोगवति। तत्रापह्नवमनूद्यारोपस्य विधानादेकवाक्यता। यदेतदित्यादि। अत्र शशलक्षणस्य विषयस्यापह्नवं न तन्मां प्रति तथेति प्रथमं विधाय पश्चात् किणस्य वस्त्वन्तरस्यारोपो विधीयते। शशकप्रतिवस्त्विवति। शशसदृशस्य किणस्यैवारोपो युक्त इति भावः। तत्त्विति। अपह्नूयमानारोप्यमाणयोः सादृश्येन निरवद्यम्। पूर्णेन्दोरित्यादि। अत्र प्रथमं चन्द्र-

१ नयार्थत्वं', २ 'प्रकुरुते' क ग पाठ. ३ 'न्दो परिपो' ग. पाठः.
४. 'हर्षेण ति' क. पाठः

द्वितीयो यथा—

"विकसदमरनारीनेत्रनीलाब्जषण्डा-
न्यधिवसति सदा यः संयमाधःकृतानि ।
न तु ललितकलापे वर्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥"

तृतीयो यथा —

"उद्भ्रान्तोज्झितगेहगूर्जरवधूकम्पाकुलोच्चैःकुच-
प्रेङ्खोलामलहारवल्लिविगलन्मुक्ताफलच्छद्मना ।
सार्धं त्वद्रिपुभिस्त्वदीययशसा शून्ये मरौ धावता
भ्रष्टं राजमृगाङ्क! कुन्दमुकुलस्थूलैः श्रमाम्भःकणैः ॥"

अत्र शून्य इत्यस्य स्थाने मन्येशब्दप्रयोगे सापह्नवोत्प्रेक्षा स्थापयिष्यते । "अहं त्विन्दुम्" इत्यादौ वाक्यभेदे साम-

---

मण्डलं नेदमित्यपह्नुत्य पश्चात् तत्समानधर्मणः कामातपत्रस्यैवारोपः । विकसदिति । अत्रामरीनेत्रनीलोत्पलनिकरलक्षणं वस्त्वन्तरं विधाय पश्चात् ललितकलापस्य मयूरस्यापह्नवः । उद्भ्रान्तेत्यादि । अत्रासत्यत्वप्रतिपादकेनच्छद्मशब्देन (द्रव्यच ?गूर्ज)रवधूहारमुक्ताफलापह्नवमनूद्य वर्णनीययशःसम्बन्धिनां श्रमाम्भःकणानामारोपो निर्णीयते । स्थापयिष्यत इति । उत्प्रेक्षाभेदनिरूपणावसरे 'क्वचिच्छलादिप्रयोग' इत्यादौ । मन्येशब्दप्रयोगात् सम्भावनं, छद्मशब्दप्रयोगाच्चापह्नवः । अत्र मुक्ताफलानि विषयः, श्रमाम्भःकणाः विषयिण, कुन्दमुकुलस्थूलत्वं गुणो निमित्तम् । अत इयं निमित्तोपादानवती जातिस्वरूपोत्प्रेक्षा । पूर्वमसामञ्जस्येन दूषिते 'यदेतदि'त्यादौ मन्येशब्दप्रयोगमनिरोध्य [illegible] न कर्तव्य इत्याह — अहं त्विन्दुमित्यादौ वाक्यभेद इति । उत्प्रेक्षायां हि

१ 'त' २ [illegible] ३ [illegible] ४. 'तिका' [illegible] ५ [illegible] ६ [illegible] ७ [illegible] ८ [illegible]

ग्रथभावे मन्येशब्दप्रयोगेऽपि नोत्प्रेक्षेत्यपि वक्ष्यते । एतस्मिन्नपि भेदेऽपह्नवारोपयोः पौर्वापर्यप्रयोगपर्यायभेदद्वयं सम्भवदपि न पूर्ववच्चित्रतामावहतीति न भेदत्वेन गणितम् । तत्रापह्नवपूर्वक आरोपे पूर्वमुदाहृतम् । आरोपपूर्वके त्वपह्नवे यथा —

"ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद् द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्यच्छलेन ॥"

इति । क्वचित् पुनरसत्यत्वं वस्त्वन्तररूपताभिधायिशब्दनिबन्धनम् । यथा —

"अमुष्मिल्लाँवण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।

विषयविषयिणोरेकस्मिन्नेव वाक्ये निर्देशो भवतीति भावः । वक्ष्यत इति । उत्प्रेक्षाद्योतकनिरूपणसमये 'किन्तूत्प्रेक्षे'त्यादौ । अस्मिंस्तृतीये भेद एकवाक्यत्वलक्षणे वाक्यभेदविषयवद्भेदानिर्देशो वैचित्र्यविशेषाभावात्, न तु लक्ष्यादर्शनादित्याह — ए(क ? त)स्मिन्नपीत्यादिना । ज्योत्स्नेत्यादि । अत्र न्यस्तं सिद्धाञ्जनपरिमलमिति पूर्वं विषयी निर्दिष्टः । पश्चाल्लाञ्छनस्यच्छलेनेति विषयोऽपह्नुतः । क्वचित् पुनरिति । अत्र पुनश्शब्देनैतद् दर्शयति — अपह्नवो नामासत्यत्वप्रतिपादनम् । तच्च क्वचित् साक्षान्नञा निर्दिश्यते, क्वचिच्छलादिशब्देन पारमार्थ्यप्रतिक्षेपकेण प्रत्याय्यते, क्वचिद् वस्त्वन्तररूपताभिधायिभिरुपात्तरूपनिषेधाक्षेपकैर्वपुर्भङ्गिनामादिशब्दैरभिव्यज्यते । अमुष्मिन्नित्यादौ रोमावलिवपुर्धूमशिखेत्यत्र रोमावलीलक्षणस्य विषयस्यापह्नवो वपुश्शब्दनिबन्धनः ॥

१. 'निरन्तरम्', २ 'न ॥ क.' क. ग. पाठः. ३ 'पाभि' ग म. पाठः.

यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥"

इति ॥

एवमभेदप्राधान्ये आरोपगर्भानलङ्काराँल्लक्षयित्वाध्यवसायगर्भा[2]ँल्लक्षयति[3] । तत्र

**अध्यवसाये व्यापारप्राधान्ये उत्प्रेक्षा ॥ २१ ॥**

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः । स च द्विविधः— साध्यः सिद्धश्च । साध्यो यत्र विषयिणोऽसत्यतया प्रतीतिः । असत्यत्वं च विषयिगतस्य धर्मस्य विषय उपनिबन्धे विषयिसम्भवित्वेन विषयासम्भवित्वेन च

उत्प्रेक्षातिशयोक्त्योर्द्वित्वेऽप्यवान्तरभेदविवक्षयाध्यवसायगर्भानिति बहुवचनम् । **अध्यवसाय** इत्यादि । अध्यवसाय इत्यनेन रूपकादेर्व्यावृत्तिः, व्यापारप्राधान्य इत्यनेनातिशयोक्तेः । **विषयनिगरणेने**त्यादि । विषयस्य निगरणं स्वरूपतः प्रतीतितो वा । तत्र स्वरूपनिगरणमतिशयोक्तौ । उत्प्रेक्षायां प्रतीतिनिगरणम् । **साध्यो यत्रे**त्यादि । असत्यत्वेन विषयिणः प्रतीतौ विषयस्य विषयितयावभासनात्मनोऽध्यवसायस्यानिष्पन्नकल्पत्वात् साध्यत्वम् । **असत्यत्वं चे**त्यादि । विषयिगतस्य धर्मस्येत्यनेन व्यपदेशहेतवो जात्यादयो निर्दिश्यन्ते । तत्र संज्ञाया विषयिगतत्वं धर्मत्वं च संज्ञिनि वक्त्रा यदृच्छया सन्निवेशितत्वादवसेयम् । यद्यपि जात्युत्प्रेक्षेत्यादिना जात्यादीनामेव विषयित्वं प्रतीयते, तथापि गुणक्रियाभिसम्बन्धस्यै निमित्तस्य जात्यादावघटमानत्वात् तदाश्रयस्यैव विषयित्वं पर्यवस्यति । ननु यत्र जात्यादयो धर्मा धर्मिपरतन्त्रतया निर्दिश्यन्ते, तत्रैवं भवतु । यत्र पुनः 'विश्लेषदुःखादि'त्यादौ धर्ममात्रं निष्कृष्य विषयित्वेन निर्दिश्यते, तत्र कथम् । उच्यते । तत्रापि गुणस्य गुण्यवि-

१. 'पुः ॥ ए', २. 'र्भानलङ्कारान्', ३ 'ति । अ' क. ख. पाठः. ४ 'स्य म', ५. 'स्य जा', ६. 'यविष' ग. पाठ.

प्रतीतेः। धर्मो गुणक्रियारूपः। तस्य सम्भवासम्भवप्रतीतौ सम्भवाश्रयस्य तत्रापरमार्थतयासत्यत्वं प्रतीयते, इतरस्य तु परमार्थतया सत्यत्वम्। यस्यासत्यत्वं, तस्य सत्यत्वप्रतीतावध्यवसायः साध्यः। अतश्च व्यापारप्राधान्यम्। सिद्धो यत्र विषयिणो वस्तुतोऽसत्यस्यापि सत्यतया प्रतीतिः। सत्यत्वं च पूर्वकस्यासत्यत्वनिमित्तस्याभावात्। अतश्चाध्यवसितप्राधान्यम्। तत्र साध्यत्वप्रतीतौ व्यापारप्राधान्येऽध्यवसायः सम्भावनमभिमानस्तर्क ऊह उत्प्रेक्षेत्यादिशब्दैरुच्यते।

---

नाभूतत्वाद् निमित्तस्य मौनेबन्धादेर्गुणमात्रे दुःखादावसम्भवाच्च दुःख्यों-दिसामान्यमेव विषयित्वेन पर्यवतिष्ठते। गुणक्रियारूप इति। गुणो दुःखादिः। क्रिया लेपनादिः। गुणक्रियाग्रहणं चोपलक्षणम् 'अङ्कुर इव' 'चन्द्रमयीवे'त्यादौ जातिसंज्ञयोः। अथवा गुण इति सिद्धो धर्मो निर्दिश्यते, क्रियेति साध्यः। *सम्भवासम्भवप्रतीताविति*। विषयिविषयनिष्ठतया। तत्र सम्भवासम्भवयोर्मध्ये। सम्भवाश्रयस्य विषयिणोऽङ्कुरादेः[1]। इतरस्यासम्भवाश्रयस्य चन्द्रादेर्विषयस्य। यस्यासत्यत्वमित्यादि। यत्तच्छब्दाभ्यां विषयी निर्दिश्यते। अतश्चेति। साध्यत्वाद् व्यापारस्याध्यवसितिक्रियात्मनः प्राधान्यम्। यथा ओदनं पचतीत्यादौ पाकादिक्रियायाः। पूर्वकस्यासत्यत्वनिमित्तस्येति। '*विषयिसम्भवित्वेने'त्यादिना पूर्वनिर्दिष्टस्य*। *नद्यतिशयोक्तौ* 'कमलमनभ्रसी'-त्यादौ विषयिगतस्य कमलत्वादेर्मुखादावसम्भवित्वं प्रतीयते। अतश्चेति। अनिष्पन्नत्वहेतोर्विषय्यसत्यत्वप्रतीतेरभावात्। साध्यत्वाभावेनाध्यवसितेरप्राधान्ये तदुपसर्जनस्य विषयिण एव प्राधान्यम्। यथा पक्व ओदन इत्यादावोदनादेः। एतदुक्तं भवति — उत्प्रेक्षायामतिशयोक्तौ च द्वयोरपि विषयस्य विषयित्वं प्रतिपिपादयिषितम्। तत्रोत्प्रेक्षायां प्रतिपाद्यमानमपि तदसत्यमेव प्रतीयत इति तत्र विषयविषयिणोः पारमार्थिकात्यन्ता-

---

१. 'नि' ख., 'नादे' ग. पाठः २. 'रा' क ग. पाठः.

तदेवमप्रकृतगतगुणक्रियाभिसम्बन्धादप्रकृतत्वेन प्रकृतस्य सम्भावनमुत्प्रेक्षा । सा च वाच्या इवादिभिः प्रदर्श्यते । प्रतीयमानायां पुनरिवाद्यप्रयोगः । सा च जातिक्रियागुणद्रव्याणामप्रकृतानामध्यवसेयत्वेन चतुर्धा । प्रकृतस्यैतद्भेदयोगेऽपि न वैचित्र्यमिति न ते गणिताः । प्रत्येकं च भावाभावाभिमानरूपतया द्वैविध्येऽष्टविधत्वम् । भेदाष्टकस्य च प्रत्येकं निमित्तस्य गुणक्रियारूपत्वे षोडश भेदाः । तेषां च प्रत्येकं निमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशत् प्रभेदाः[1] ।

---

भेदावभासनपर्यन्तस्याध्यवसायस्यानिर्वृत्तेः साध्यत्वम् । इतरत्र विपर्ययेण सिद्धत्वम् । अन्ये तु असत्यत्वं चेत्यारभ्याध्यवसितप्राधान्यमित्येवमन्तं ग्रन्थमेवं व्याचक्षते । **विषयिगतस्येति**[2] । विषयगतत्वे सति विषयिगतस्य, न तु विषयिमात्रनियतस्य, विषयविषयिसाधारणस्येति यावत् । धर्मस्य कौटिल्यादेः । **विषयिसम्भवित्वेन विषयासम्भवित्वेन च प्रतीतेरिति** । ईदृशं कौटिल्यमङ्कुरादावेव सम्भवति, न चन्द्रादाविपत्येवंरूपायाः । अयमर्थः — विषये विषय्यध्यवसायनिमित्तभूतस्योपात्तस्य वानुपात्तस्य वा कौटिल्यादेर्विषयिण्येव सम्भवः प्रतीयते, न तु विषये । अतो निमित्ताभावान्निमित्तिनोऽपि विषयिणस्तत्रासत्यत्वं प्रतीयत इति । **धर्मो गुणक्रियारूप** इति । कौटिल्यादिक्षामतागमनादि यन्निमित्तं निर्दिश्यते, तद्रूपः । **तस्य सम्भवासम्भवेत्यादि** पूर्ववत् । **असत्यत्वनिमित्तस्याभावादिति** । तदभावश्च मुखादिगतत्वेन कमलाद्यध्यवसाये कस्यचिन्निमित्तत्वेनाविवक्षणाद्, विवक्षितत्वेऽप्यसम्भवप्रतीत्यभावाद्वा । **अतश्चेत्यादि** पूर्ववत् । **तत्रेति** । साध्यत्वसिद्धत्वयोर्मध्ये । फलितं दर्शयति — **तदेवमित्यादिना** । अङ्कुराद्यपश्यदादिगतकुटिलत्वादिगुणक्षामतागमनादिक्रियाभिसम्बन्धादङ्कुरादित्वेनापश्यदादित्वेन वा चन्द्रादेः कपोलादेश्च सम्भावनमुत्प्रेक्षेत्यर्थः । **इवादिभिरिति** । आदिशब्देन मन्ये शङ्के ध्रुवमित्यादयो गृह्यन्ते । **एतद्भेदयोगेऽपीति** । जातिक्रियागुण-

---

१. 'तत्र', २. 'प्रकाराः । ते' क. ख. पाठ. ३. 'थ' ख. पाठः.

तेषु च प्रत्येकं हेतुस्वरूपफलोत्प्रेक्षणरूपत्वेन षण्णवतिर्भेदाः। एषा गतिर्वाच्योत्प्रेक्षायाः। तत्रापि द्रव्यस्य प्रायः स्वरूपोत्प्रेक्षणमेवेति हेतुफलोत्प्रेक्षाभेदास्ततः पातनीयाः। प्रतीयमानायास्तु यद्यप्युद्देशत एतावन्तो भेदाः, तथापि निमित्तस्यानुपादानं तस्यां न सम्भवतीति तैर्भेदैर्न्यूनोऽयं प्रकारः। इवाद्यनुपादाने निमित्तस्य चाकीर्तने उत्प्रेक्षणस्य निष्प्रमाणत्वात्। प्रायश्च स्वरूपोत्प्रेक्षात्र न सम्भवति। तदेवं प्रतीयमानोत्प्रेक्षाया यथासम्भवं भेदनिर्देशः। [एषा चार्थाश्रयापि धर्मविषये श्लिष्टशब्दहेतुका क्वचिद् दृश्यते।].

---

द्रव्यलक्षणभेदयोगेऽपि। **हेतुफलोत्प्रेक्षाभेदास्ततः पातनीया** इति। उपलक्षणमेतत्। हेतुफलोत्प्रेक्षयोर्निमित्तानुपादानभेदानां पातनीयत्वस्य हेतूत्प्रेक्षायां 'यस्य प्रकृतिसम्बन्धिन' इत्यादिना फलोत्प्रेक्षायां 'यदेव तस्ये'त्यादिना च सूचयिष्यमाणत्वात्। तदेवं वाच्योत्प्रेक्षायाः षट्पञ्चाशद्भेदा व्यवतिष्ठन्ते। *तथाहि*—जातेस्तावत् स्वरूपोत्प्रेक्षायां भावाभावाभिमानत्वेन गुणक्रियानिमित्तत्वेन तदुपादानानुपादानाभ्यां चाष्टौ भेदाः। हेतुफलोत्प्रेक्षयोर्निमित्तानुपादानस्याभावात् प्रत्येकं चत्वारो भेदा इति संहृत्य षोडश भेदाः। एवं गुणक्रिययोरपि। द्रव्यस्य तु हेतुफलोत्प्रेक्षाभावादष्टभेदत्वमेवावशिष्यते। एवं षट्पञ्चाशद्भेदत्वं वाच्योत्प्रेक्षायाः। **यथासम्भवमिति**। प्रतीयमानोत्प्रेक्षायां द्रव्योत्प्रेक्षा तावन्न सम्भवति। तत्र स्वरूपोत्प्रेक्षाया एव विद्यमानत्वात्। इह च तदभावस्य 'स्वरूपोत्प्रेक्षाप्यत्र न सम्भवती'त्युक्तत्वात्। जातिगुणक्रियाणां च स्वरूपोत्प्रेक्षाभावेन प्रत्येकमष्टविधत्वे चतुर्विंशतिधा प्रतीयमानोत्प्रेक्षा। यथासम्भवं भेदनिर्देश इत्यस्यानन्तरं क्वचित् पठ्यते—एषा चार्थाश्रयापि धर्मविषये श्लिष्टशब्दहेतुका क्वचिद् दृश्यत इति। उदाह्रियते च—

"प्रस्थे स्थितां हिमवतोऽपि न बाधते या-
मूर्ध्वेक्षणानलभयादिव जाड्यमुद्रा।

---

१. 'तु प्र', २. 'षड्त्वे ष', ३. 'ध', ४ 'प्युपदेश', ५. 'नं न',
६. 'स्य च नि', ७. 'न भव' क. . पाठः. ८. धं' रा. पाठः.

क्वचित् पदार्थान्वयवेलायां सादृश्याभिधानादुपक्रान्ताप्युपमा वाक्यार्थतात्पर्यसामर्थ्यादभिमन्तृव्यापारोपारोहक्रमेणोत्प्रेक्षायां

गोष्ठीषु वः सततसन्निहितास्तु देवी
सा शारदा नवसुमार्पितकामधेनुः ॥"

इति। तत्र धर्मविषय इत्यत्र धर्मशब्देन निमित्तभूतो गुणक्रियारूपो धर्मो निर्दिश्यते विषयिभूतो वा। उभयथाप्युदाहरणं न घटते। जाड्यमुद्रेत्यत्र खलु शैत्याप्रतिपत्तिलक्षणार्थद्वयावभासात् श्लेषसम्भवः। सा च जाड्यमुद्रा न तावद् निमित्तं, हेतुत्वेनोत्प्रेक्ष्यमाण भयं प्रति फलस्यैव बाधाभावस्य निमित्तत्वयोगात्। नापि विषयी, भयस्यैव विषयित्वात्। विषयत्वं तु घटते। धर्मस्य तु विषयत्वं ग्रन्थकारस्याभिमतमनभिमतं वेति चिन्त्यं, 'धर्मी धर्म्यन्तरगतत्वेने'त्यादिना 'धर्म एव धर्म्यन्तरगतत्वेने'त्यादिना च विषयिण एव धर्मिधर्मत्वप्रतीतेः, विषयस्य धर्मित्वमात्रप्रतीतेश्च। व्यतिरिक्तेषु चोदाहरणेषु न क्वचिदपि धर्मस्य विषयत्वं दृश्यते। यद्यपि 'प्रकृतस्यैतद्भेदयोगेऽपी'त्यादिना जात्यादेरपि धर्मस्य विषयत्वमुक्तं, तथापि धर्मिपरतन्त्र एव जात्यादिर्विषयो भवितुमर्हति, यथा तमःप्रभृतिः, न स्वतन्त्रः। नहि धर्ममात्रस्य निमित्तभूतेन धर्मेण सम्बन्धः सम्भवति। जाड्यमुद्रायास्तु चेतनत्वारोपमन्तरेण भयं बाधकर्तृत्वं निषेध्यत्वं च तर्हि न सम्भवतीति धर्मित्वविवक्षैव युक्ता। तद्विवक्षायां च धर्मविषय इत्याद्युक्तिर्न घटते। केचित्तु जाड्यमुद्राबाधाभावं भयोत्प्रेक्षानिमित्तत्वेनोक्त्वा तत्र च जाड्यमुद्राशब्दस्य श्लिष्टत्वाद् धर्मविषय इत्यत्र धर्मशब्देन निमित्तभूतो धर्मो निर्दिश्यत इत्याहुः। एतच्च न समीचीनम्। विषयस्यानुपलम्भात्। यदि बाधकर्मत्वाभावविशिष्टा शारदा विषयः, तदा निमित्तनिमित्तिनोः फलहेत्वोर्वैयधिकरण्यं स्यात्। अथ बाधकर्तृत्वाभावविशिष्टा जाड्यमुद्रा विषयः, तदा तस्या निमित्तानुप्रवेशो न घटेत। अथवा शारदास्वभावप्रयुक्तो बाधाभावो भयहेतुत्वेनाध्यवसीयत इति तत्स्वभावस्य विषयत्वं, तदानीं विषयस्य स्वकण्ठेनानुपादानाद् 'न च विषयस्य गम्यत्वं युक्त-

१ 'स्वतन्त्र' ख पाठ  २ '...न' ख ग पाठ

पर्यवस्यति । क्वचिच्छलादिशब्दप्रयोगे सापह्नवोत्प्रेक्षा भवति । अतश्चोक्तवक्ष्यमाणप्रकारवैचित्र्येणानन्त्यमस्याः । साम्प्रतं तु दिङ्मात्रेणेयमुदाह्रियते । तत्र जात्युत्प्रेक्षा यथा —

"स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः ।
स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥"

अत्राङ्कुरशब्दस्य जातिशब्दत्वाद् जातिरुत्प्रेक्ष्यते । क्रियोत्प्रेक्षा यथा —

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।"

अत्र लेपनवर्षणक्रिये तमोनभोगतत्वेनोत्प्रेक्ष्येते । उत्तरे त्वर्धे —

---

मि'त्यनेन विरोध इति सर्वथास्य पाठस्य निरवद्यत्वं चिन्त्यम् । निरवद्यत्वेऽपि वोदाहरणान्तरं दर्शयितव्यम् । यथा —

पद्मोल्लासकरः कुर्वन्नपास्ततमसो दिशः ।
रविधर्मन् ! प्रतापस्ते भाति भास्वानिवापरः ॥

अत्र निमित्तभूतः पद्मोल्लासकरत्वादिर्धर्मः श्लेषेण निर्दिष्टः । सादृश्याभिधानादिति । उपमानोपमेययोः सादृश्यद्योतकस्येवादेः सदृशधर्माभिधायिनः क्रियादेर्वा प्रयोगात् । उपक्रान्तापीति । आमुखे स्फुरितापि । वाक्यार्थतात्पर्यसामर्थ्यं नाम विषयविशेषोपादानवशेनोपमानस्य प्रकृते सम्भवौचित्यप्रतीतिः । अभिमन्तृव्यापारः उत्प्रेक्षापरपर्यायोऽभिमानः । अपह्नुतौ वक्ष्यमाणत्वेन सूचितामिह वक्ति — क्वचिदित्यादिना । उक्तवक्ष्यमाणेति । उक्ताः प्रकारा जात्युत्प्रेक्षादयः । वक्ष्यमाणाः 'तस्याश्चेवादिशब्दवन्मन्येशब्दोऽपी'त्यादिना वक्ष्यमाणेन द्योतकभेदेन भिन्नाः । जातिरुत्प्रेक्ष्यत इति । चन्द्रो विषयः । अङ्कुरजाति-

---

१. 'त दि' क. ख. पाठः.

"असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥"

इत्यत्रोपमैव, नोत्प्रेक्षा। गुणोत्प्रेक्षा यथा —

"सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम् ॥"

अत्र दुःखं गुणः। द्रव्योत्प्रेक्षा यथा —

"पातालमेतन्नयनोत्सवेन
विलोक्य शून्यं मृगलाञ्छनेन।
इहाङ्गनाभिः स्वमुखच्छलेन
कृताम्बरे चन्द्रमयीव सृष्टिः ॥"

अत्र चन्द्रस्यैकत्वाद् द्रव्यत्वम्। एतानि भावाभिमाने उदाहरणानि। अभावाभिमाने यथा —

"कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥

अत्रापश्यन्ताविति क्रियाया अभावाभिमानः। एवं जात्या-

---

स्वरूपं विषयी। कुटिलत्वाख्यो गुणो निमित्तमुपात्तम्। लेपनेत्यादि। तमोनभसी विषयौ। लेपनवर्षणक्रियास्वरूपे विषयिणौ। व्यापनादिक्रिया निमित्तं गम्यते। उपमैवेति। अत्र हि असत्पुरुषसेवादृष्ट्योः साधर्म्यमात्रं प्रतीयते, न त्वभेदाध्यवसायः। सैषेत्यादि। अत्र नूपुरं विषयः दुःखाख्यगुणलक्षणो हेतुर्विषयी। मौनित्वं गुणो निमित्तमुपात्तम्। पातालमित्यादि। मुखानि विषयः। चन्द्रस्वरूपं विषयी। कान्त्यादिगुणलक्षणं निमित्तं गम्यते। इयं च सापह्नवोत्प्रेक्षा। कपोलेत्यादि। अत्र

---

१. 'शाखा' क ख. पाठः.

दावप्यूह्यम् । गुणस्य निमित्तत्वं यथा — "नवबिसलताकोटिकुटिल:" इत्यत्रोदाहृते कुटिलत्वस्य । क्रियाया यथा — "ईदृक्षां[1] क्षामतां गतौ" इत्यत्र क्षामतागमनस्य । एते निमित्तोपादानस्योदाहरणे । अनुपादाने[2] "लिम्पतीव तमोऽङ्गानि" इत्याद्युदाहरणम्[3] । हेतूत्प्रेक्षा यथा — "विश्लेषदुःखादिव बद्धमौनम्" इत्यादौ । स्वरूपोत्प्रेक्षा यथा —

"कुबेरजुष्टां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग् दक्षिणा गन्धवहं मुखेन
व्यलीकनिःश्वासमिवोत्ससर्ज ॥"

फलोत्प्रेक्षा यथा—

"चोलस्य यद्भीतिपलायितस्य
भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति
व्यपाटयन् द्रष्टुमिवाक्षराणि ॥"

---

कपोलौ विषयः । दर्शनक्रियाभावलक्षणो हेतुर्विषयी । क्षामतागमनक्रिया निमित्तम् । गुणस्य निमित्तत्वमित्यादि । तथा च तत्रैव दर्शितम् । कुबेरेत्यादि । अत्र गन्धवहो विषयः । निःश्वासजातिस्वरूपं विषयी । समयलङ्घनानन्तरभवनात्मकक्रियालक्षणनिमित्तं गम्यते । 'स वः पायादि'त्यादौ जात्युत्प्रेक्षाया अयं भेदः — तत्रालङ्कारान्तरनिरपेक्षमेवोत्प्रेक्षोत्थानम् । इह तूष्णरश्मौ दिशोश्च नायकव्यवहारसमारोपलक्षणसमासोक्तिसापेक्षत्वम् । तत्र च कपालाङ्कुरलक्षणस्य विषयिणोऽत्यन्तासत्त्वम् । इह तु नैवम् । यद्वा निमित्तोपादानानुपादानवशाद् भेदः । चोलस्ये-

---

१. 'ऽक्षा', २. 'ने यथा — लि', ३ 'त्युदा', ४. 'ति । स्व', ५. 'नाघो दि' क. ख पाठः

एवं वाच्योत्प्रेक्षाया उदाहरणदिग् दत्ता। प्रतीयमानोत्प्रेक्षा यथा—

"महिळासहस्सभरिए तुह हिअए सुहअ! सा अमाअन्ती।
अणुदिणमणण्णअम्मा अङ्गं तणुअं पि तणुएइ॥"

इति[2]। अमाअन्ती इत्यत्रावर्तमानेवेति[3] तनूकरणे हेतुत्वेनोत्प्रेक्षितम्। एवं भेदान्तरेष्वपि ज्ञेयम्। [4]श्लिष्टशब्दहेतुकी यथा—

"अनन्यसामान्यतया प्रसिद्ध-
स्त्यागीति गीतो जगतीतले सः।
अभूदहंपूर्विकयागताना-
मतीव भूमिः स्मरमार्गणानाम्॥"

अत्र धर्मविषये मार्गणशब्दः श्लिष्टः। उपमोपक्रमोत्प्रेक्षा यथा—

"कस्तूरीतिलकन्ति फालफलके देव्या मुखाम्भोरुहे
लोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति।

---

त्यादि। वनान्ता विषयः। दर्शनक्रियात्मकं फलं विषयी। विपाटनक्रिया निमित्तम्। महिळेत्यादि।

महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति॥

अत्र विरहिणी विषयः। अमान्तीति क्रियाया अभावो हेतुर्विषयी। तनू-

---

१. 'णानि दत्तानि। प्र', २ 'त्यत्र अ', ३ 'रे ज्ञे', ४. 'त्प्रेक्षा यथा—
प्रस्थे स्थिता हिमवतोऽपि न बाधते यां मूर्धेक्षणानलभयादिव जाड्यमुद्रा।
गोष्ठीषु वः सततसंनिहितास्तु देवी सा शारदा नवसुभाषितकामधेनुः॥
उपमोत्प्रे' क. ख. पाठ..

* एतदुदाहरणपाठभेदावनकिालती व्याख्याता।

याः कर्णे विकचोत्पलन्ति कुचयोरङ्के च कालागुरु-
स्थासन्ति प्रदिशन्तु[1] तास्तव शिवं श्रीकण्ठकण्ठत्विषः॥"

अत्र यद्यपि 'सर्वप्रातिपदिकेभ्यः क्विबित्येके' (वा० ३. १. ११) इत्युपमानात् क्विब्विधावामुखे उपमाप्रतीतिः, तथाप्युपमानस्य प्रकृते सम्भवौचित्यात् सम्भावनोत्थान उत्प्रेक्षायां पर्यवसानम्। यथावा विरहवर्णने "केयूरायितमङ्गुलीयकैः" इत्यादौ। एषापि समस्तोपमाप्रतिपादकविषये[2]ऽपि दृश्यते। हर्षचरितवार्त्तिके साहित्यमीमांसायां च तेषु तेषु[5] प्रदेशेषु[3] उदाहृतेति[4] इह तु ग्रन्थविस्तरभयाद् न प्रपञ्चिता। सापह्नवोत्प्रेक्षा यथा —

"गतासु तीरं तिमिघट्टनेन ससम्भ्रमं पौरविलासिनीषु।
यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति सिप्रा॥"

अत्रेवशब्दमाहात्म्यात् सम्भावनं छलशब्दप्रयोगाच्चापह्नवो-

करणक्रियात्मकं कार्यं निमित्तम्। **उपमानात् क्विब्विधाविति**। क्विप 'उपमानादाचारे' (३. १. १०) इति प्रकरणे विहितत्वाद् उपमानस्य कस्तूरीतिलकादेः प्रकृते सम्भवौचित्यं च फालफलकादिविषयविशेषनिबन्धनादवसेयम्। अत्र श्रीकण्ठकण्ठत्विषो विषयः। कस्तूरीतिलकादिलक्षणजातिस्वरूपं विषयी। फालादिस्थानविशेषसम्बन्धित्वे सति नैल्यं निमित्तम्। **केयूरायितमित्यादि**। अत्रापि क्यङमुखे उपमानप्रतीतौ सत्यामपि पूर्ववदुत्प्रेक्षात्वम्। **गतास्वित्यादि**। अत्र फेनततिर्विषयः। अट्टहासजातिस्वरूपं विषयी। *शैत्यादिगुणो निमित्तं गम्यते*। अत्र यथा द्योतकशब्दस्यावापोद्धाराभ्यामुत्प्रेक्षात्वमपह्नुत्यलङ्कारतां च भवति, एवं

१. 'यच्छन्तु'. २. 'ये। ह'. ३ 'भेदेषु', ४. 'ति प्र', ५. 'प्रपञ्चते। सा', ६. 'स्वं' ख. पाठ.

ऽवगम्यते । एवं छद्मादिशब्दप्रयोगेऽपि ज्ञेयम् । "अपर इव पाकशासनः" इत्यादावपरशब्दाप्रयोगे[1] तूपमैवेयम् । तत्प्रयोगे तु प्रकृतस्य राज्ञः पाकशासनत्वप्रतीतावध्यवसायसम्भवादिवशब्देन च तस्य साध्यत्वप्रतीतेरुत्प्रेक्षैवेयम्[2] । इवशब्दाप्रयोगे[3] सिद्धत्वादध्यवसायस्यातिशयोक्तिः । इवापरश[4]ब्दयोरप्रयोगे तु रूपकम्[5] । तदेवं प्रकारवैचित्र्येणावस्थितायामुत्प्रेक्षायां[6] हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो धर्मस्य हेतुरुत्प्रेक्ष्यते, स धर्मोऽध्यवसायवशादभिन्न उत्प्रेक्षाया निमित्तत्वेनाश्रीयते । स च वाच्य एव नियमेन भवति । अन्यथा कं प्रति[7] हेतुः स्यात् । यथा—"अपश्यन्ताविवान्योन्यम्" इत्यादौ[8] । अत्र कपोलयोः प्रकृतयोः सम्बन्धित्वेनोपात्तस्य क्षामतागमनस्य हेतुरदर्शनमुत्प्रेक्षितम् । हेतुफलं च क्षामतागमनं तत्र निमित्तम् । एवम्

---

शब्दान्तरस्याप्यावापोद्धारवशादुत्प्रेक्षात्वमलङ्कारान्तरत्वं च भवतीति दर्शयितुमाह—**अपर इवे**त्यादि । **अपरशब्दाप्रयोग** इति । पाकशासन इव राजेत्यादौ, उपमानस्य सिद्धत्वात् । **प्रकृतस्ये**त्यादि । स्वर्गवर्तिपाकशासनापेक्षयापरः पाकशासनोऽयमित्येवंरूपायाम् । **इवशब्देने**ति । अपरमार्थस्य परमार्थतयैव प्रतीतेः । **उत्प्रेक्षैवेया**मिति । द्रव्योत्प्रेक्षा । सम्पदादिलक्षणो गुणो निमित्तं गम्यते । **इवशब्दाप्रयोगे सिद्धत्वा**दिति । अपरमार्थप्रतीत्यभावात् । **अतिशयोक्ति**रिति । अभेदे भेदलक्षणा । **रूपक**मिति । आरोपमात्रस्य प्रतीतेः । सामान्येनाभिहिते अपि निमित्तस्योपादानानुपादाने विषयविशेषेण व्यवस्थापयति—**तदेवमि**त्यादिना । **अध्यवसायवशादभिन्न** इति । विरहासञ्चारप्रयुक्ते क्षाम-

---

१. 'ग उप', २. 'तावुत्प्रे' क. ख. पाठः. ३ 'गे तु सि' मूलपाठः ४. 'अप', ५. 'स्याप्र', ६. 'या य', ७. 'नि स हे', ८. 'दि ।' क. ख. पाठः. ९. 'र च क पाठः. १०. 'प्रतयिते' ख. पाठः.

"अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्"

इत्यत्र[1] नूपुरगतस्य मौनित्वस्य यो हेतुर्दुःखित्वं, तदुत्प्रेक्षणे मौनित्वमेव निमित्तं ज्ञेयम्। एवं सर्वत्र। स्वरूपोत्प्रेक्षायां यत्र धर्मी धर्म्यन्तरगतत्वेनोत्प्रेक्ष्यते, तत्रापि निमित्तभूतो धर्मः क्वचिन्निर्दिश्यते। यथा "स वः पायादिन्दुः" इत्यादौ। अत्र कुटिलता[2] निर्दिष्टैव। "वेलेव रागसागरस्ये"त्यादौ[3] तु संक्षोभकारित्वादि गम्यमानम्। यत्र[4] च धर्म एव धर्मिगतत्वेनोत्प्रेक्ष्यते, तत्रापि निमित्तस्योपादानानुपादानाभ्यां द्वैवि[5]ध्यम्। उपादाने यथा—

"प्राप्याभिषेकमेतस्मिन् प्रतितिष्ठासति द्विषाम्।
चकम्पे लिप्यमानाज्ञा भयविह्वलितेव भूः॥"

अत्र भूगतत्वेन विह्वलितत्वाख्यधर्मोत्प्रेक्षायां कम्पादि निमित्तमुपात्तम्। अनुपादाने यथा—"लिम्पतीव तमोऽङ्गानी"त्यादि। अत्र तमोगतत्वेन लेपनक्रियाकर्तृत्वोत्प्रेक्षायां व्यापनादि निमित्तं गम्यमानम्। व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात्। न च[6] विषयस्य गम्यमानत्वं युक्तम्। तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात्। तस्माद् यथोक्तमेव साधु। फलोत्प्रेक्षायां यदेव तस्य कारणं, तदेव निमित्तम्। तस्यानुपादाने कस्य तत् फलत्वेनोक्तं स्यात्। तस्मात् तत्र निमित्तस्योपादानमेव। न प्रकारान्तरम्।

---

तागमनमौनित्वे अन्ये। अन्ये चादर्शनदुःखप्रयुक्ते। एवमप्यध्यवसायवशादभिन्नयोस्तयोर्विषयविषयिनिष्ठत्वेन निमित्तत्वम्। वेलेवेत्यादि। असिद्धत्वेन

---

१. 'त्यादात्र', २ 'ता', ३ 'दौ म', ४ 'त्र ध', ५ 'तवि', ६. 'च गम्यमानत्व' क. ख. पाठ.

यथा —

"रथस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥"

अत्राश्वपरिवर्तनफलस्योत्तरदिग्गमनं कारणमेव निमित्तमुपात्तम् । तदसावुत्प्रेक्षायाः कक्ष्याविभागः प्रचुरस्थितोऽपि लक्ष्ये दुरवधारत्वादिह न प्रपञ्चितः । तस्याश्चेवादिशब्दवद् मन्येशब्दोऽपि प्रतिपादकः । किन्तूत्प्रेक्षासामग्र्यभावे मन्येशब्दप्रयोगो वितर्कमेव प्रतिपादयति । यथोदाहृतं प्राग् "अहं त्विन्दु मन्ये" इत्यादि ॥

एवमध्यवसायस्य साध्यतायामुत्प्रेक्षां निर्णीय सिद्धत्वेऽतिशयोक्तिं लक्षयति—

**अध्यवसितप्राधान्ये त्वतिशयोक्तिः ॥ २२ ॥**

अध्यवसाये त्रयं भवति स्वरूपं विषयो विषयी च । विषयस्य[1] हि विषयिणा निगीर्णत्वेऽध्यवसायस्वरूपोत्थानम् । यत्र साध्यत्वे स्वरूपप्राधान्यम् । सिद्धत्वे त्वध्यवसितप्राधान्यम् । विषयप्राधान्यमध्यवसाये नैव सम्भवति । अध्यवसि-

रागसागरवेलाया अनुपमानत्वम् । रथेत्यादि । अत्र रविर्विषयः । परिवर्तन विषयी । उत्तरदिग्गमनक्रिया निमित्तम् । अश्वपरिवर्तनफलस्य अश्वपरिवर्तनात्मनः फलस्येत्यर्थः । उदाहरणान्तरोपन्यासे तु निमित्त वैचित्र्यमेव, तुमुन्वच्चतुर्थ्यपि फलत्व द्योतयतीति दर्शयितु वा । उत्प्रेक्षासामग्री विषयिणोऽसत्यत्वप्रतीत्यादिः । वितर्कमेवेति । आख्यातत्वात् ॥

अथोत्प्रेक्षानन्तरमतिशयोक्तेर्लक्षणीयत्वे सङ्गतिमाह— एवमित्यादिना । अध्यवसितप्राधान्ये त्विति । तुशब्देन व्यापारप्राधान्य व्यवच्छिनत्ति । यद्यपि विषयविषयिणोरुभयोरप्यध्यवसायस्य कर्मत्व, तथा-

१ 'नस्य फ', २ 'न्ये त्वदरिविरह इ', ३. स्य वि', ४ 'त्वेऽप्य' क ख, पाठ,

तत्प्राधान्ये चातिशयोक्तिः । अस्याश्च पञ्च प्रकाराः — भेदेऽभेदः, अभेदे भेदः, सम्बन्धेऽसम्बन्धः, असम्बन्धे सम्बन्धः, कार्यकारणपौर्वापर्यविध्वंसश्च । तत्र भेदेऽभेदो यथा —

"कमलमनम्भसि कमले
च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगे-
त्युत्पातपरम्परा केयम् ॥"

अत्र मुखादीनां कमलाद्यैर्भेदेऽभेदः । अभेदे भेदो यथा —

"अण्णं लडहत्तणअं अण्णावि अ कावि वत्तणच्छाआ ।
सामा सामण्णपआवइणो रेहच्चिअ ण होइ ॥"

अत्र लडहत्वादीनामभेदेऽप्यन्यत्वेन भेदः । यथा वा —

"मग्गिअलद्धम्मि बला-
मोडिअचुम्बिए अप्पणा अ उवणमिए ।
एक्कम्मि पिआहरए
अण्णोण्णा होन्ति रसभेआ ॥"

---

प्यध्यवसितशब्देन विषय्येवोच्यते विषयप्राधान्यासम्भवादित्याह — अध्यवसाय इत्यादि । अण्णं इत्यादि ।

अन्यत् सौन्दर्यमन्यापि च कापि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखैव न भवति ॥

अन्यत्वेन भेद इति । अन्यत्वाभिधानमुखेनैव स्वरूपभेदः प्रत्याय्यते । मग्गिअलद्धेत्यादि ।

मार्गितलब्धे बलात्काग्चुम्बिते आत्मना चोपनीते ।
एकस्मिन्नपि प्रियाधरेऽन्येऽन्ये भवन्ति रसभेदाः ॥

---

१ स', २ मम्भ', ३ 'देऽप्यभे' ४. 'ट' क ख पाठ

अत्राभिन्नस्यापि प्रियाधररसस्य विषयविभागेन भेदोपनिबन्धः। सम्बन्धेऽसम्बन्धो यथा —

"लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः।
एषापि स्वगुणानुरूपरमणाभावाद् वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता॥"

अत्र लावण्यद्रविणस्य सम्बन्धेऽप्यसम्बन्धस्तन्वीलावण्यप्रकर्षप्रदर्शनार्थं निबद्धः। यथा वा —

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तप्रभः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥"

अत्र पुराणप्रजापतिनिर्माणसम्बन्धेऽप्यसम्बन्ध उक्तः। असम्बन्धे सम्बन्धो यथा —

"पुष्पं प्रवालोपहितं यदि स्या-
न्मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद् विशदस्य तस्या-
स्ताम्रोष्ठपर्यस्तरुचः स्मितस्य॥"

---

विषयविभागेनेत्यादि। मार्गितलब्धत्वादिविषयविशेषद्वारा। अतश्चोदाहरणान्तरमुपन्यस्तमिति भावः। अस्याः सर्गविधावित्यादौ चन्द्रादेरसम्बन्धे सम्बन्धस्योदाहरणत्वं नाशङ्कितव्यमित्याह — अत्र पुरा...

---

१. 'ति तवेन', २ 'त तस्काम्न' ३ '...', ... 'निपादनार्थं। म', ६. 'रित', ७ ...

अत्र सम्भावनया सम्बन्धः । यथावा —

"दाहोऽम्भःप्रसृतिंपचः प्रचयवान् बाष्पः प्रणालोचितः
श्वासाः प्रेङ्खितदीप्रदीपकलिकाः पाण्डिम्नि मग्नं वपुः ।
किं चान्यत् कथयामि रात्रिमखिलां त्वन्मार्गवातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥"

अत्र दाहादीनामम्भःप्रसृत्याद्यैरसम्बन्धेऽपि सम्बन्धः सिद्धत्वेनोक्तः । कार्यकारणपौर्वापर्यविध्वंसः पौर्वापर्यविपर्ययात् तुल्यकालत्वाद् वा । पौर्वापर्यविपर्ययो यथा —

"हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ ! लोचनविषयं त्वया भजता ॥"

तुल्यकालत्वं यथा —

"अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः ।
अयमागतश्च कालो हन्त हताः पथिकगेहिन्यः ॥"

कविसंरम्भादिति भावः । एतदर्थमेवोदाहरणान्तरोपन्यासः । 'पुष्पमि'त्यादेः 'दाहोऽम्भःप्रसृतिम्' इत्यादेश्चोदाहरणयोर्भेदं दर्शयितुम् 'अत्र सम्भावनये'ति 'सिद्धत्वेने'ति चोक्तम् । हृदयमित्यादि । अत्र मालतीहृदयस्य वल्लभकर्तृकमधिष्ठानं कारणं मदनबाणकर्तृकाधिष्ठानलक्षणात् कार्यात् चरमभावित्वेन निर्दिष्टम् । अविरलविलोलेत्यादि । अत्र वर्षाकालागमनलक्षणस्य कारणस्य पथिकगेहिनीहननलक्षणस्य च कार्यस्य तुल्यकालत्वं स्पष्टम् । ननु विषयविषयिणोरभेदप्रतिपत्तिरध्यवसायः । स च प्रथम एव प्रकारे सम्भवति, न त्वभेदे भेद इत्यादिप्रकारचतुष्टये । अत आह —

१. 'नारा ग', २. 'ट', ३ 'बा । रि', ४ 'ये' क ग. पाठः, ५. 'ति । ए' ग पाठ. ६ 'म्भ ह' क पाठः. ७ 'ब', ८ 'णरा' ग पाठः.

एषु पञ्चसु भेदेषु भेदेऽभेदादिवचनं लोकातिक्रान्तगोचरम्। अत्र चातिशयाख्यं यत् फलं प्रयोजकत्वाद् निमित्तं तत्राभेदाध्यवसायः। तथाहि— "कमलमनम्भसी"त्यादौ वदनादीनां वास्तवं सौन्दर्यं कविसमर्पितेन सौन्दर्येणाभेदेनाध्यवसितं भेदेऽभेदवचनस्य निमित्तम्। तत्र च सिद्धोऽध्यवसाय इत्यध्यवसितप्राधान्यम्। न तु वदनादीनां कमलादिभिरभेदाध्यवसायो योजनीयः। अभेदे भेद इत्यादिप्रकारेष्वव्याप्तेः। तत्र हि "अण्णं ळडअत्तणअं" इत्यादौ सातिशयं लडहत्वं निमित्तभूतमभेदेनाध्यवसितम्। एवमन्यत्रापि ज्ञेयम्। तदभिप्रायेणैवाध्यवसितप्राधान्यम्। प्रकारपञ्चकमध्यात् कार्य-

एषु पञ्चस्वित्यादि। लोकातिक्रान्तो गोचरो विषयो यस्य तत् लोकातिक्रान्तगोचरम्। अत्र चेत्यादि। फलं भेदेऽभेदादिवचनानाम्। प्रयोजकत्वात् सर्वप्रकारवर्तित्वेनानुवृत्तत्वात् फलत्वेन प्रवर्तकत्वाद्वा निमित्तम्। तत्रेत्यादि। लौकिकस्य लोकोत्तीर्णेन सहाभेदाध्यवसायविषयत्वेन विवक्षित इत्यर्थः। प्रथमप्रकारेऽप्यध्यवसायस्य न मुखकमले विषयविषयिणौ, अपि तर्हीमे इत्याह— तथाहीत्यादि। मुखादिकमलाद्योर्विषयविषयित्वेऽनिष्टमाह— न तु वदनादीनामित्यादिना। निमित्तभूतमिति। अभेदे भेदवचनस्य। अभेदेनाध्यवसितमिति। वास्तवलडहत्वेन। एवमन्यत्रापीति। 'भगिअ' इत्यादौ सातिशयो रसः, 'लावण्ये'त्यादौ लावण्यप्रकर्षः, 'अस्या' इत्यादौ रूपोत्कर्षः, 'पुष्पमि'त्यादावधरस्मितकान्तिः, 'दाह' इत्यादौ दाहादिप्रकर्षः, 'हृदयमधिष्ठितमि'त्यादौ 'अविरलविलोलै'-त्यादौ च कार्यकारणत्वे तारतम्यवत् शैघ्रयं च वास्तवै रसादिभिरभेदेना-

१. 'रम्य', २. 'अ', ३. 'णाव्य' क. ख. पाठः. ४. 'ना। अधरस्मितकान्तिरित्यत्र कान्तिशब्देन शोभाप्रकर्ष उच्यते। यदुक्तं — 'शोभैव कान्तिराख्याता मन्मथाप्यायनोज्ज्वला' इति। नि' क. पाठः. ५. 'र्थः तु' ख. पाठः. ६. 'त्रत्वे' ख. ग. पाठः.

कारणभावेन यः प्रकारः स कार्यकारणताश्रयालङ्कारप्रस्तावे प्रपञ्चेनार्थं लक्षयिष्यते ॥

एवमध्यवसायाश्रयेणालङ्कारद्वयमुक्त्वा गम्यमानौपम्याश्रया अलङ्कारा इदानीमुच्यन्ते । तत्रापि पदार्थवाक्यार्थगतत्वेन तेषां द्वैविध्ये पदार्थगतमलङ्कारद्वयं क्रमेणोच्यते—

**औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगिता ॥ २३ ॥**

इवाद्यप्रयोगे औपम्यस्य गम्यत्वम् । तत्र प्राकरणिकानामप्राकरणिकानां वार्थानां समानगुणक्रियाभिसम्बन्धेऽन्वितार्था तुल्ययोगिता । यथा—

"सञ्जातपत्रप्रकराञ्चितानि
समुद्वहन्ति स्फुटपाटलत्वम् ।
विकस्वराण्यर्ककरप्रभावाद्
दिनानि पद्मानि च वृद्धिमीयुः ॥"

---

ध्यवसितानि । तदभिप्रायेण सातिशयलडहत्वाद्यभिप्रायेण । लक्षयिष्यत इति । इह तु वचनमन्यैरतिशयोक्तिभेदत्वेन लक्षितत्वात् ॥

औपम्यस्य गम्यत्व इत्यादि । वैवक्षिकस्य वास्तवस्य वोपमानोपमेयभावस्यारोपाध्यवसायावन्तरेण गम्यत्व इत्यर्थः । तत्रेह वैवक्षिकत्वम् । उत्तरत्र वास्तवत्वम् । प्रस्तुतानामप्रस्तुतानां वेति बहुवचनमविवक्षितं, द्वयोरपि दर्शनात् । एवं दीपकेऽपि प्रस्तुताप्रस्तुतयोः प्रस्तुताप्रस्तुतानां वेति द्रष्टव्यम् । धर्मशब्दार्थमाह— गुणक्रियाभिसम्बन्ध इति । अन्वितार्थेति । तुल्यधर्मयोगत्वात् । सञ्जातेत्यादि । दिनपक्षे

---

१. 'ऽन्वार्थं', २. 'मर्थानामप्रा', ३. 'वा ग' इ. ख. पाठः. ४. 'पात्र', ५. 'देन', ६ 'ऽ' ख पाठः.

अत्र ऋतुवर्णनस्य प्रक्रान्तत्वाद् दिनानां पद्मानां च प्रकृ[1]-तत्वम् । वृद्धिगमनं[2] क्रिया । एवं गुणेऽपि ।

"योगपट्टो[3] जटाजालं तारवी त्वङ् मृगाजिनम् ।
उचितानि तवाङ्गस्य यद्यमूनि तदुच्यताम् ॥"

अत्रोचितत्वं गुणः । अप्राकरणिकानां यथा—

"धावत्त्वदश्वपृतनापतितं[4] मुखेऽस्य
निर्निद्रनीलनलिनच्छदकोमलाङ्ग्या ।
भग्नस्य गूर्जरनृपस्य रजः कयापि
तन्व्या तवासिलतया च यशः प्रमृष्टम् ॥"

अत्र गूर्जरनृपं[5] प्रति नायिकासिलतयोरप्राकरणिकत्वम् । प्रमार्जनं क्रिया । गुणो यथा—

"त्वदङ्गमार्दवं[6] द्रष्टुः कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥"

अत्र कठोरत्वं गुणः । एवमेषा चतुर्विधा व्याख्याता ॥

प्रस्तुताप्रस्तुतयोर्व्यस्तत्वे तुल्ययोगितां प्रतिपाद्य समस्तत्वे दीपकमुच्यते—

प्रस्तुताँ[7]नामप्रस्तुतानां च दीपकम् ॥ २९ ॥

---

सज्जानामातपत्राणां प्रकरैरञ्चितानि, अन्यत्र सतां शोभनानां जातानां पत्राणां निकरैः । यद्यमूनीति । 'नपुंसकमनपुंसकेन—'(१. २. ६९) इत्यादिना नपुंसकत्वम् । चतुर्विधेति । गुणक्रियाविषयत्वेन प्रकृताप्रकृतनिष्ठत्वेन च ॥

---

१. 'क्रान्तत्व', २. 'गो', ३. 'ट्ट', ४. 'तं', ५. 'रं प्र', ६ 'वे दृष्टे ः', ७. 'ताम्' क. ख. पाठः.

औपम्यस्य गम्यत्व इत्याद्यनुवर्तते । प्राकरणिकाप्राकरणिकवर्गस्य मध्यादेकत्र निविष्टः समानो धर्मः प्रसङ्गेनान्यत्रोपकाराद् दीपनाख्याद् दीपसादृश्येन दीपकाख्यालङ्कारोत्थापकः । तत्रैवाद्यप्रयोगादुपमानोपमेयभावो गम्यमानः । स च वास्तव एव । पूर्वत्र तु शुद्धप्राकरणिकत्वे शुद्धाप्राकरणिकत्वे वा वैवक्षिकः, प्राकरणिकत्वाप्राकरणिकत्वप्रभावितत्वादुपमानोपमेयभावस्य । अनेकस्यैकक्रियाभिसम्बन्धादौचित्यात् पदार्थगतत्वोक्तिः । वस्तुतस्तु वाक्यार्थगतत्वम् । तत्रादिमध्यान्तवाक्यगतत्वेन धर्मस्य प्रवृत्तावादिमध्यान्तदीपकाख्यास्त्रयोऽस्य भेदाः । क्रमेणोदाहरणं —

"रेहइ मिहिरेण णहं रसेण कव्वं सरेण जोव्वणअम् ।
अमएण धुणीधवओ तुमए णरणाह! भुवणमिणम् ॥"

---

औपम्यस्य गम्यत्व इत्याद्यनुवर्तत इति । आदिशब्देन पदार्थगतत्वेनेति समानधर्माभिसम्बन्ध इति च गृह्यते । एकत्रेति । प्राकरणिकेऽप्राकरणिके वा । दीपनाख्याद् दीपसादृश्येनेति । अनेन दीपयतीति ण्वुलि वा दीप इवेति 'संज्ञायां कन्' (५. ३. ७५) इति वा दीपकमिति निरुक्तिर्दर्शिता । घटार्थमादीपितो हि दीपः पटादीनपि प्रकाशयति । पूर्वत्र तुल्ययोगितायाम् । अनेकस्येत्यादि । 'रेहइ' इत्यादौ मिहिरादेर्नभःप्रभृतेश्चैकस्यां राजनक्रियायां हेतुत्वेन कर्तृत्वेन च सम्बन्धात् । औचित्यादिति । क्रियाया एकत्वेनौचित्यम् । वस्तुतस्त्विति । क्रियाया आवृत्त्यान्वयेन मिहिरहेतुकनभश्शोभनादिभिः वर्णनीयहेतुकभुवनशोभनसादृश्यस्य गम्यमानत्वात् । रेहइत्यादि ।

---

१. 'पक सा', २. 'त्र शु', ३ 'त्वेऽपि वा', ४. 'त्वभाविता', ५. 'त्वेनादि', ६. 'स्य पृ', ७ 'णानि—रे', ८ 'लो', ९. 'णम् ॥ स' क. ख. पाठः. १०. 'नि वनि वा' क. पाठः. ११. 'प', १२. 'स्यामश्यर' ख. पाठः.

यथा वा—

"सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥"

"विसमअओ च्चिअ काणवि
काणवि वोळेइ अमअणिम्माओ ।
काणवि विसामअमओ
काणवि अविसामअम (अ) ओ काळो ॥"

शोभते मिहिरेण नभो रसेन काव्यं स्मरेण यौवनम् ।
अमृतेन धुनीधवः (समुद्रः ?) त्वया नरनाथ ! भुवनमिदम् ॥

अत्र राज्ञः प्रस्तुतत्वम् । मिहिरादीनामप्रस्तुतत्वम् । सञ्चारपूतानीत्यादि । आदिमध्यान्तवाक्यगतत्वेनेत्यादिवचनात् समानधर्मस्यादिवाक्यादिवर्तित्वमेवादिदीपकत्वादौ प्रयोजकम् । उद्भटादिभिश्च तथैवाङ्गीकृतम् । अत्र चोदाहरणे प्रचक्रम इत्यस्य श्लोकमध्यगतत्वेऽपि आदिवाक्यगतत्वादादिदीपकत्वमेव । उदाहरणान्तरोपन्यासश्च सूत्रगतबहुवचनप्राप्तस्य प्रस्तुताप्रस्तुतनिष्ठस्य बहुत्वस्यानियमप्रदर्शनार्थः । यथा वा विसमअओ च्चिअ इत्यादौ । यथा वेत्येतत् सञ्चारपूतानीत्यतः पूर्वं पठनीयम् । विसमअ (ओ) इत्यादि ।

विषमय एव केषामपि केषामप्ययमत्यमृतनिर्माणः ।
केषामपि विषामृतमयः केषामप्यविषामृतमयः कालः ॥

अत्र दुःखिनि वक्तरि विषमयकालापक्रमणस्य प्रस्तुतत्वम् । इतरेषामप्रस्तुतत्वम् । अत्र वोळेइत्यस्य मध्यवाक्यवृत्तित्वाद् मध्यदीपकम् । किंचणाण इत्यादि ।

१. 'नुः ॥ यथा वा—वि' क. ख पाठः. २ 'यम् । य' ख. पाठः. ३. 'समयन्ति' ग. घ. पाठः. ४. 'त का' ख पाठः ५ वो' ग. पाठः

"किवणाण धण णाआण फणामणी केसराइ सीहाणं ।
कुळवालिआण अ थणा केत्तो घेप्पन्ति अमुआणं ॥"

एवमेकक्रियामयं दीपकं निर्णीतम् । अत्र च यथानेककारकगतत्वेनैका क्रिया दीपकं, तथानेकक्रियागतत्वेनैकं कारकम् । यथा —

"साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् ।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम् ॥"

---

कृपणानां धनं नागानां फणामणयः केसराणि सिंहानाम् ।
कुलपालिकानां च स्तनाः कुतो गृह्यन्तेऽमृतानाम् ॥

अत्र गृह्यन्त इत्यस्यान्तवाक्यवर्तित्वादन्तदीपकत्वम् । अत्र चेत्यादि । एका क्रिया यथा नभःप्रभृत्यनेककारकगतत्वेन दीपकं भवतीत्यर्थः । एकं कारकमिति । दीपकमित्यनुषङ्गः । **साधूनामित्यादि** । 'न कुतूहलि कस्य मनः' इत्यस्य पूर्वेण सम्बन्धे मध्यदीपकत्वम्, उत्तरेण त्वन्तदीपकत्वम् । उपकरणादीत्यादिशब्देन लक्ष्मीदर्शनादयो गृह्यन्ते । अत्र च महात्मचरितश्रवणस्यैव कविसंरम्भगोचरत्वात् प्रस्तुतत्वमभिसन्धाय सामान्यलक्षणं योजयितव्यम् । अथवेदं स्पष्टमुदाहरणं —

सङ्ग्रामधीरेण सहेतरेषां महीक्षितां कः स्तुतिमारभेत ।
स्मरेदनु स्वर्द्रुममन्यवृक्षान् मन्येत शैलान्तरवच्च मेरुम् ॥

अत्रादिवाक्ये क इति कर्तृकारकं निर्दिष्टम् । मध्ये यथा —

यदान्तरिक्षं परिमातुमिच्छेद् दोर्भ्यां समुद्रं क इवोत्तितीर्षेत् ।
सङ्ग्रामधीरस्य गुणांश्च वर्णैः पञ्चाशता वर्णयितुं यतेत ॥

अन्ते यथा —

सेवितुमिह यदुनाथं पार्श्वे पत्युर्दिवौकसां स्थातुम् ।
अपरोक्षयितुमधीशं वचसामपि कः कुतूहली न पुमान् ॥

---

१. 'अमुआणा घेप्पन्ति', २. 'या दी', ३. 'कत्रय नि' ४. 'श्र य', ५. 'कु' क. ख. पाठः. ६. 'भुजगा' क. पाठः. ७. 'णि च मि' ख. पाठः. ८. 'तः स्पृश्यन्ते' क. पाठः. ९. 'स्थावान्तरवा', १०. 'पत्व', ११. 'दि । कु' ख. पाठः.

अत्रोपकरणाद्यनेकक्रियाकर्तृत्वेन कुतूहलविशिष्टमेकं मनो निर्दिष्टम्। छायान्तरेण तु मालादीपकं प्रस्तावान्तरे लक्षयिष्यते॥

**वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा॥ २५॥**

पदार्थारब्धो वाक्यार्थ इति पदार्थगतालङ्कारानन्तरं वाक्यार्थगतालङ्कारप्रस्तावः। तत्र सामान्यधर्मस्येवाद्युपादाने सकृन्निर्देशे[2] उपमा। वस्तुप्रतिवस्तुभावेनासकृन्निर्देशेऽपि सैव। इवाद्यनुपादाने सकृन्निर्देशे दीपकतुल्ययोगिते। असकृन्निर्देशे तु शुद्धसामान्यरूपत्वं बिम्बप्रतिबिम्बभावो वा। आद्यः प्रकारः प्रतिवस्तूपमा, वस्तुशब्दस्य वाक्यार्थवाचित्वे प्रतिवाक्यार्थमुपमा साम्यमित्यन्वर्थाश्रयणात्। केवलं काव्यसमयात् पर्यायान्तरेण पृथङ् निर्देशः। द्वितीयप्रकाराश्र-

---

**छायान्तरेणेति**। उत्तरोत्तरगुणावहत्वेन। **प्रस्तावान्तर इति**। शृङ्खलान्यायालङ्कारप्रस्तावे॥

**वाक्यार्थगतत्वेनेत्यादि**। सैव उपमैव। **असकृन्निर्देशे त्विति**। इवाद्यनुपादाने चेति शेषः। अत्र चौपम्यस्य गम्यत्व इत्येतदनुवृत्तेरिवादेरनुपादानम्। शुद्धेत्यनेन 'तस्यापि बिम्बप्रतिबिम्बैकतया निर्देश' इति दृष्टान्ते वक्ष्यमाणत्वादत्र तद्रहितं सामान्यं गृह्यत इत्याह। **प्रतिवाक्यार्थमिति**। उपमानवाक्ये उपमेयवाक्ये च साधारणधर्मस्य निर्देशात्। **काव्यसमयादिति**। "नैकं पदं द्विः प्रयोज्यं प्रायेणे"ति वचनात् कथितपदस्य दुष्टताभिधानाच्च। प्रथमोपात्तस्यापि पर्यायत्वात् तदपेक्षया द्वितीयपदस्य पर्यायान्तरत्वम्। **द्वितीयेति**। बिम्बप्रतिबिम्बाश्रयेण।

---

१. 'गतानन्त', २ 'शेऽपि' ग पाठ. ३ 'प्रकार' ग पाठ. ४. 'सर्वदि' इति ख पाठ.

येण दृष्टान्तो वक्ष्यते। तदेवमौपम्याश्रयेणैव[2] प्रतिवस्तूपमा। यथा—

"चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि।
आवन्त्य एव निपुणाः सुदृशो रतनर्मणि॥"

अत्र चतुरत्वं साधारणो धर्म उपमानवाक्ये, उपमेयवाक्ये तु निपुणपदेन निर्दिष्टः। न केवलमियं साधर्म्येण, यावद् वैधर्म्येणापि[3] दृश्यते। यथात्रैवोत्तरार्धस्थाने

"विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि"

इति पाठे॥

तस्यापि विम्बप्रतिविम्बतया निर्देशे दृष्टान्तः॥ २६॥

तस्यापि, न केवलमुपमानोपमेययोः। तच्छब्देन सामान्यलक्षणो धर्मः प्रत्यवमृष्टः। अयमपि साधर्म्यवैधर्म्याभ्यां द्विविधः। आद्यो यथा—

"अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः।
दैवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः॥"

---

निपुणपदेनेत्यनेन पर्यायान्तरत्वं दर्शयति। यावद् वैधर्म्येणेति। आवन्तीव्यतिरिक्तसुदृशां नैपुणाभावेन चकोर्यपेक्षया वैधर्म्यम्॥

प्रत्यवमृष्ट इति। पूर्वसूत्रे निर्दिष्टः। अयमपीति। न केवलं प्रतिवस्तूपमेत्यपेरर्थः। अत्र यद्यपीत्यादिना प्रतिवस्तूपमात्वमाशङ्क्य परिहरति। अब्धिलङ्घनादावित्यादिशब्देन पातालनिमग्नतनुत्वं गृह्यते, दिव्यवागुपास-

---

१. 'र', २. 'ण। थ', ३. 'ण। य', ४.'क्लिनो ध' क. ख. पाठः।

अत्र यद्यपि ज्ञानाख्य एको धर्मो निर्दिष्टः, तथापि नैतन्निबन्धनमौपम्यं विवक्षितम्। यन्निबन्धनं च विवक्षित, तत्राब्धिलङ्घनादावस्त्येव दिव्यवागुपासनादिना प्रतिबिम्बनम्।
द्वितीयो यथा—

"कृतं च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विपः।
तमांसि तिष्ठन्ति हि तावदंशुमान्
न यावदायात्युदयाद्रिमौलिताम्॥"

अत्र निहतत्वादेः स्थानादिना वैधर्म्येण प्रतिबिम्बनम्॥

**सम्भवतासम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शना॥ २७॥**

प्रतिबिम्बप्रस्तावेनास्या लक्षणम्। अत्र क्वचित् सम्भवन्नेव वस्तुसम्बन्धः स्वसामर्थ्याद् बिम्बप्रतिबिम्बभावं

---

नादीत्यादिशब्देन गुरुकुलक्लिष्टत्वम्। निहतत्वादेरित्यादिशब्देन मनःकर्मकं गर्वाभिमुखीकरणं, स्थानादीत्यादिशब्देनोदयाद्रिमौलिताप्राप्त्यभावश्च गृह्यते॥

**सम्भवतेत्यादि**। निदर्शनाया गम्यमानप्रतिबिम्बनत्वं सामान्यलक्षणम्। सम्भवतेत्यादिना तस्या भेदनिर्देशः। वस्तुशब्देन पदार्थो वाक्यार्थश्चोच्यते। गम्यमानमित्यनेन दृष्टान्ताद् व्यावृत्तिः। तत्र हि प्रकृताप्रकृतरूपयोर्वाक्यार्थयोर्बिम्बप्रतिबिम्बभावरूप एव सम्बन्धः। इह तु प्रकारान्तरेण निर्दिष्टः सम्बन्धस्तद्गमयति। **प्रतिबिम्बनमाक्षिप्यत** इति। उपपादकतयेति शेषः। ननु चूडामणीत्यादौ बोधप्रयोजकत्वस्य चेतनधर्मत्वात् पर्वतस्य चाचेतन(धर्म?)त्वात् कुतः सम्भवद्वस्तु-

---

१. 'मृ। बिन्दु य' क ख पाठ · 'पादनम, ३. 'म्यगा', ४ 'व ए' ख. पाठः.

कल्पयति । क्वचित् पुनरन्वयबाधादसम्भवता वस्तुसम्बन्धेन प्रतिबिम्बनमाक्षिप्यते । सम्भवद्वस्तुसम्बन्धो[1] यथा —

"चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्यातिथेयीति बोधयन् गृहमेधिनः ॥"

अत्र बोधयन्निति तत्समर्थाचरणे[2] प्रयोगात् सम्भवति वस्तुसम्बन्धः । असम्भवद्वस्तुसम्बन्धो[3] यथा —

"अव्यात् स वो यस्य निसर्गवक्रः
स्पृशत्यधिज्यस्मरचापलीलाम् ।
जटापिनद्धोरगराजरत्न-
मरीचिलीढोभयकोटिरिन्दुः ॥"

सम्बन्धवत्त्वम्[4] । अत आह — अत्र बोधयन्निति । प्रयोगादिति । णिच इति शेषः । क्वचित् तु णिच इति पठ्यत एव । अयमर्थः — णिचस्तावत् प्रयोज्यविषया प्रवर्तना अर्थः । सा च प्रेषणाध्येषणतत्समर्थाचरणरूपेण त्रिधा । तत्र प्रेषणमाज्ञा । अध्येषणं प्रार्थना । तत्समर्थाचरणं चतुर्धा — अनुमतिरुपदेशोऽनुग्रह आनुकूल्याचरणं चेति । तत्र यस्यानुमतिमन्तरेणार्थो न निर्वर्तते, तस्य राजादेरनुमत्या प्रयोजकत्वं, गुरुवैद्यादेस्तूपदेशेनेष्टसाधनत्वज्ञापनापरनाम्ना । यत्र पुनः केनचिद् जिघांसितं पलायमानं कश्चिद् निरुणद्धि, निरुद्धश्च हन्यते, तत्र निरोद्धा हन्तुरनुग्रहं करोतीत्यनुग्रहेण तस्य प्रवर्तकत्वम् । कारीषोऽग्निरध्यापयतीत्यादौ कारीषोऽग्निर्निर्वात एकान्ते सुप्रज्वलितः शीतकृतमध्ययनविरोधिनमुपद्रवमपनयन् असत्यामपि प्रयोज्यव्यापारोद्देशेन प्रवृत्तावध्ययन आनुकूल्याचरणेन प्रवर्तको भवति । तत्र पर्वतकर्तृकमागतस्य रवेः शिरसा धारणं गृहमेधिनां सद्विषयातिथेयीकर्तव्यताबोधेऽनुकूलमिति पर्वतस्यानुकूल्याचरणेन प्रवर्तकत्वमिति । अत्र शैलस्य गृहमेधिषु रवेः सत्सु शिरसा धारणस्यातिथेय्याः करणे च प्रति-

१ 'न्धो', २ 'णे णिच प्र' ग. पाठ. ३ 'न्धो' क. ख. पाठः. ४. 'न्धत्वम्' ख. पाठः. ५. 'व' ग. पाठः.

अत्र च स्मरचापसम्बन्धिन्या लीलाया वस्त्वन्तरभूतेनेन्दुना स्पर्शनमसम्भवत् लीलासदृशीं लीलामवगमयतीत्यदूरविप्रकर्षाद् बिम्बप्रतिबिम्बेनैनमुक्तम्। एषापि पदार्थवाक्यार्थवृत्तिभेदाद् द्विधा। पदार्थवृत्तिः समनन्तरमुदाहृता। वाक्यार्थवृत्तिर्यथा—

"त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डरीकरणं विधोः॥"

केचित् तु दृष्टान्तालङ्कारोऽयमित्यूचुः। तदसत्। निरपेक्षयोर्वाक्यार्थयोर्हि बिम्बप्रतिबिम्बभावे दृष्टान्तः। यत्र तु प्रकृतवाक्यार्थे वाक्यार्थान्तरमध्यारोप्यते सामानाधिकरण्येन, तत्र

---

बिम्बनम्। अत्र च स्मरचापेत्यादिना वस्तुसम्बन्धस्यासम्भवं दर्शयति। लीलासदृशीमित्यनेन प्रतिबिम्बनम्। ननु स्मरचापेन्दुसम्बन्धिन्योर्लीलयोरेकजातीयत्वेनात्यन्तभेदाभावात् कथं बिम्बप्रतिबिम्बभावः। अत आह— **अदूरविप्रकर्षादिति**। सत्यम्। धर्मिभेदोपाधिकं धर्मभेदमाश्रित्य बिम्बप्रतिबिम्बभाव इत्यदोषः। अथवा विशिष्टयोरिन्दुस्मरचापयोरेव बिम्बप्रतिबिम्बभावोऽवगम्यते। स कथं लीलानिष्ठत्वेनेत्याशङ्क्याह— अदूरविप्रकर्षात्। धर्मधर्मिणोरभेदोपचाराद् धर्मिगतो बिम्बप्रतिबिम्बभावो धर्मगतत्वेनोक्त इत्यदोषः। यद्वा उपात्तयोरेव बिम्बप्रतिबिम्बभावः। अत्र चानुपात्तया इन्दुलीलया कथं बिम्बप्रतिबिम्बभाव इत्यत आह। सत्यम्। अनुपादानेऽपि गम्यमानत्वाददोषः। **एषापीति**। गम्यमानौपम्यालङ्कारवद् गम्यमानप्रतिबिम्बनैषापीत्यर्थः। **समनन्तरमिति**। अव्यादित्यादाविन्दुस्मरचापलीलयोः पदार्थत्वात्। **निरपेक्षयोरिति**। अत्र च सापेक्षत्वं यदिदमोरुपादानात् स्फुटमेव। प्रकृतवाक्यार्थे अलक्तककरणके पादनखरत्नकर्मके मार्जने। वाक्यार्थान्तरं श्रीखण्डलेपकरणकं विधुकर्मकं पाण्डरीकरणम्। **अध्यारोप्यत** इति, यदिदमोरेकविषयत्वेन सामानाधिकरण्यप्रतीतेः।

---

१. 'त्र स्म' मूलपाठः. २. 'ग'. ३. 'ख्यरत्न', ४. 'र्थेर्थे', ५. 'इ दि र', ६. 'न त्र' क. ग. पाठः

सम्बन्धानुपपत्तिमूला निदर्शनैव युक्ता, न[1] दृष्टान्तः। एवञ्च

"शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥"

इत्यत्र दृष्टान्तबुद्धिर्न कार्या। उक्तन्यायेन निदर्शनाप्राप्तेः। इयं चोपमेय उपमानवृत्तस्यासम्भवात् प्रतिपादिता पूर्वैः। वस्तुतस्तूपमेयवृत्तस्योपमाने[2]ऽसम्भवादपि सम्भवति, उभयत्रापि सम्बन्धविघटनस्य विद्यमानत्वात्। तद्यथा—

"वियोगे गौडनारीणां यो गण्डतलपाण्डिमा।
अलक्ष्यत स खर्जूरीमञ्जरीगर्भरेणुषु॥"

अत्र गण्डतलं प्रकृतम्। तद्धर्मस्य पाण्डिम्नः खर्जूरीरेणुष्वसम्भवादौपम्यप्रतीतिः। एवं च प्रकारः शृङ्खलान्यायेनापि सम्भवति। यथा—

"मुण्डसिरे बोरफळं बोरोवरि बोरअं थिरं धरसि।
विग्गुच्छाअइ अप्पा णाळिअछेआ छळिज्जन्ति॥"

अन्यैश्च दृष्टान्तत्वेन दर्शितस्योदाहरणस्य निदर्शनात्वमेवाह—एवञ्चेति। उक्तन्यायेनेति। वाक्यार्थे वाक्यार्थान्तराध्यारोपरूपत्वेन निरपेक्षत्वाभावात्। पूर्वैः उद्भटादिभिः। उपमेये इन्द्वादौ। उपमानवृत्तस्य स्मरचापलीलादेरसम्भवात्। अत्र गण्डतलमित्यादिना प्रस्तुतमर्थमुदाहरणे योजयति। शृङ्खलान्यायेन रशनाक्रमेण। मुण्डेत्यादि।

मुण्डशिरसि बदरफलं बदरस्योपरि बदरं स्थिरं धारयसि।
विडम्ब्यत आत्मा धूर्तच्छेकाश्छल्यन्ते॥

काका न छल्यन्त इत्यर्थः। अत्र छेकच्छलनं मुण्डशिरसि बदरफलधारणवद् बदरस्योपरि बदरान्तरधारणवच्चाशक्यमित्यर्थः। मालयापीति। एक-

१. 'न तु द', २ 'नेऽप्यस', ३. 'न स', ४ 'प प्र' क. ख. पाठः, ५. 'रधा' ख. पाठः.

इयमपि क्वचिन्मालयापि भवन्ती दृश्यते । यथा —

"अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजल्पः कृतः
कृतान्धमुखमण्डना यदबुधो जनः सेवितः ॥"

क्वचित् पुनर्निषेधसामर्थ्यादाक्षिप्तायाः प्राप्तेः सम्बन्धानुपपत्त्यापि निदर्शना भवति । यथा —

"उत्कोपे त्वयि किञ्चिदेव चलति द्राग् गूर्जरक्ष्माभृता
मुक्ता भूर्न परं भयान्मरुजुषां यावत् तदेणीदृशाम् ।
पद्भ्यां हंसगतिर्मुखेन शशिनः कान्तिः कुचाभ्यामपि
क्षामाभ्यां सहसैव वन्यकरिणां कुम्भस्थलीविभ्रमः ॥"

अत्र मुक्तेति निषेधपदम् । तदन्यथानुपपत्त्या पादयोर्हंसगतिप्राप्तिराक्षिप्यते । सा च तयोरनुपपन्ना सती सादृश्यमवगमयतीत्यसम्भवद्वस्तुसम्बन्धनिबन्धना निदर्शना ॥

---

स्मिन् वाक्यार्थे बहूनां वाक्यार्थानामध्यारोपात् । **अरण्यरुदितमि**त्यादि । अत्राबुधजनसेवालक्षणे वाक्यार्थेऽरण्यरुदितकरणादयो बहवो वाक्यार्था आरोपिताः । न केवल प्रतिबिम्बनस्यैव गम्यत्वं, गमकस्यापि सम्बन्धविघटन(स्यापी ? स्ये)ति दर्शयति — **क्वचित् पुनरित्यादिना** । **निषेधसामर्थ्यादिति** । अप्रसक्तस्य प्रतिषेधायोगात् । उत्कोप इत्यादौ नञाद्यप्रयोगान्निषेधप्रतीतिः कुतस्त्येत्यत आह — **मुक्तेतीति** । **तदन्यथानुपपत्त्येति** । अनुपात्तस्य मोक्षासम्भवात् । **सा चेति** । हंसगतिप्राप्तिः । तयोः शत्रुस्त्रीपादयोः । **अनुपपन्ना सतीति** । हंसपदयोरेव युक्तत्वात् । **सादृश्यमिति** । हंसगतिसदृशी मन्दा गतिर्मुक्तेत्यर्थः । एवं शशिकान्त्यादावपि द्रष्टव्यम् ॥

---

१ 'रि भ', २ 'ता', ३. 'स्य ग' क. ग. पाठ.

**भेदप्राधान्य उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः ॥ २८ ॥**

अधुना भेदप्राधान्येनालङ्कारकथनम् । भेदो वैलक्षण्यम् । स च द्विधा भवति, उपमानादुपमेयस्याधिकगुणत्वे न्यूनगुणत्वे वा भावात् । विपर्ययो न्यूनगुणत्वम् । क्रमेणोदाहरणे —

"दिदृक्षवः पक्ष्मलताविलास-
मक्ष्णां सहस्रस्य मनोहरं ते ।
वापीषु नीलोत्पलिनीविकास-
रम्यासु नन्दन्ति न षट्पदौघाः ॥"

"क्षीणः क्षीणोऽपि शशी भूयो भूयो विवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि! यौवनमनिवर्ति यातं तु ॥"

अत्र विकस्वरनीलोत्पलिन्यपेक्षयाक्षिसहस्रस्य पक्ष्मलतया वैलक्षण्यमधिकगुणत्वम् । चन्द्रापेक्षया च यौवनस्य न्यूनगुणत्वम् । शशिवैलक्षण्येन गतस्यापुनरागमनात् ॥

**उपमानोपमेययोरेकस्य प्राधान्यनिर्देशेऽपरस्य सहार्थसम्बन्धे सहोक्तिः ॥ २९ ॥**

---

भेदो वैलक्षण्यमिति । न त्वन्योन्याभावः । आधिक्यविपर्ययौ गुणद्वारेत्याह — **अधिकगुणत्व** इत्यादिना । **अधिकगुणत्वमिति** । तच्च षट्पदानामनन्दनेन द्योतितम् । **यौवनस्य न्यूनगुणत्वमिति** । अत्राप्यस्थैर्यापेक्षया चन्द्राद् यौवनस्याधिक्यमिति लक्षणे विपर्ययग्रहणं न कर्तव्यमित्यन्ये । व्यतिरेके उत्कर्षापकर्षप्रतीतेर्भेदप्राधान्यं स्फुटम् ॥

---

१. 'वा। वि', २ 'णे', ३ 'तयाधि', ४. 'या यौ', ५. 'मात् ॥'

भेदप्राधान्य इत्येव । गुणप्रधानभावनिमित्तकमत्र भेदप्राधान्यम् । सहार्थप्रयुक्तश्च गुणप्रधानभावः । उपमानोपमेयत्वं चात्र वैवक्षिकम् । द्वयोरपि प्राकरणिकत्वात् । प्राकरणिकाप्राकरणिकभावित्वादुपमानोपमेयभावस्य । सहार्थसामर्थ्यादुभयोस्तुल्यकक्ष्यत्वम् । तत्र तृतीयान्तस्य नियमेन गुणभावादुपमानत्वम् । अर्थाच्च परिशिष्टस्य प्रधानत्वादुपमेयत्वम् । शाब्दश्चात्र गुणप्रधानभावः । वस्तुतस्तु विपर्ययोऽपि स्यात् । तत्रापि नियमेनातिशयोक्तिमूलत्वमस्याः । सा तु कार्यकारणप्रतिनियमविपर्ययरूपा अभेदाध्यवसायरूपा च । अभेदाध्यवसायश्च श्लेषभित्तिकोऽन्यथा वा । साहित्यं चात्र कर्त्रादीनां भेदाद् ज्ञेयम् । तत्र कार्यकारणप्रतिनियमविपर्ययरूपा यथा —

"भवदपराधैः सार्धं सन्तापो वर्धतेतरां तस्याः।"

अत्रापराधानां सन्तापं प्रति हेतुत्वेऽपि तुल्यकालत्वेनोपनिबन्धः । श्लेषभित्तिकाभेदाध्यवसायरूपा यथा —

---

सहोक्तौ तु कथमित्याह — **गुणप्रधानभावेति** । गुणप्रधानभावश्च क्रियाभिसम्बन्धस्य शाब्दत्वार्थत्वाभ्यामवगन्तव्यः । **द्वयोरपीत्यादि** । वास्तवस्यौपम्यस्य प्रकृताप्रकृतनिष्ठत्वेन सम्भवात् । वैवक्षिकस्यौपम्यस्य सद्भावे हेतुमाह — **सहार्थेति** । यत्र खलु द्वयोर्गुणप्रधानभूतयोः समकालमेवैकक्रियाद्यनुप्रवेशः, तत्र सहार्थोन्मज्जनम् । **वस्तुतस्त्विति** । यथा— 'अस्तं भास्वानि'त्यादौ । अत्रास्तगमने रिपूणामेव प्राधान्यमभिहितं, तदस्तगमनस्यैव बलसहरणे प्रधानकारणत्वात् । **सा त्विति** । अतिशयोक्तिः । कार्यकारणेत्यनेनातिशयोक्तेः पञ्चमप्रकारो निर्दिश्यते, अभेदाध्यवसायेति प्रथमः । श्लेषभित्तिकः श्लेषाश्रयः । कर्त्रादीत्यादिशब्देन कर्मादिपरिग्रहः ।

१. 'यभावत्व', २. 'द्वि यर्यो', ३ 'तु', ४. 'श्वे', ५. 'श्चा' श्वे', ६. 'नियम' ध. स. पाठ०.

"अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि"

अत्रास्तगमनं श्लिष्टम्, अस्तमित्यस्योभयार्थत्वात्। तदन्यथारूपा यथा—

"कुमुददलैः सह सम्प्रति विघटन्ते चक्रवाकमिथुनानि"

अत्र विघटनं सम्बन्धिभेदाद् भिन्नं, न तु श्लिष्टम्। एतद्विशेषपरिहारेण सहोक्तिमात्रं नालङ्कारः। यथा—

"अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः॥"

इत्यादौ। एतान्येव कर्तृसाहित्ये उदाहरणानि। कर्मसाहित्ये यथा—

---

अस्तगमनमिति। अस्तशब्दस्य शैलविशेषनाशयोर्वाचकत्वात्। तदन्यथारूपा अश्लेषभित्तिका (अ?)भेदाध्यवसायमूला। कुमुददलैरित्यादि। अत्र श्लेषाभावमभेदाध्यवसायार्थं भेदं च दर्शयति—विघटनं सम्बन्धीत्यादिना। एतद्विशेषेति। प्रथमनिर्दिष्टमतिशयोक्तेः प्रकारद्वयं प्रत्ययमृश्यते। एतानीत्यादि। अपराधसन्तापादीनां वर्धनादौ कर्तृत्वात्। एवं कर्तृकर्मणोः साहित्यमुदाहृतम्। करणसाहित्ये यथा—

अमोघैरिपुभिः सार्धमुपायैः फलशालिभिः।
सङ्ग्रामधीरः सर्वेषां भिनत्ति हृदयं द्विषाम्॥

सम्प्रदानसाहित्ये यथा—

मदभरमन्थरसिन्धुरगमनाभिः सह सुपर्वतरुणीभिः।
सङ्ग्रामधीर! भवतः पृतनाभ्यस्तिष्ठते द्विषां वर्गः॥

अपादानसाहित्ये यथा—

अधिसमरमाततज्ये रविवर्मन्! कार्मुके त्वयाकृष्टे।
आर्द्रं द्विषामुरस्तस्तरुणीनां लोचनैः समं पतति॥

"द्युजनो मृत्युना सार्धं यस्याजौ तारकामये।
चक्रे चक्राभिधानेन प्रेष्येणाप्तमनोरथः॥"

अत्र करोतिक्रियापेक्षया द्युजनस्य मृत्योश्च कर्मत्वम्। इयं च मालयापि भवन्ती दृश्यते। यथा—

"उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम्।
वैदेह्या मनसा समं च सहसाकृष्टं ततो भार्गव-
प्रौढाहंकृतिकन्दलेन च समं भग्नं तदैशं धनुः॥"

सहोक्तिप्रतिभटभूतां विनोक्तिं लक्षयति—

**विना किञ्चिदन्यस्य सदसत्त्वाभावो विनोक्तिः॥ ३०॥**

सत्त्वस्य शोभनत्वस्याभावोऽशोभनत्वम्। एवमसत्त्वस्याशोभनत्वस्याभावः शोभनत्वम्। ते द्वे सत्त्वासत्त्वे यत्र कस्यचिदसन्निधानान्निबध्येते, सा द्विधा विनोक्तिः। अत्रा-

---

समरगतो यदुनाथः सह दुष्प्रसहेन वैरिवर्गेण।
सुभगैर्नवाप्तिजनुषः सुरसुदृशां निग्रहन्ति दुःखस्य॥

अत्र निग्रहन्त्यपेक्षया कर्मत्वेऽपि शेषत्वेन विवक्षितयोर्दुःखवैरिवर्गयोः साहित्यम्। अधिकरणसाहित्ये यथा—

शास्त्रेषु रमते सार्धं शस्त्रैर्विमतभेदिभिः।
रविवर्ममहीपाल! को नाम भवता विना॥

**उत्क्षिप्तमि**त्यादि। अत्रैकस्यैव धनुष उत्क्षेपणादिषु कौशिकपुलकादिभिः सहार्थसम्बन्धान्मालात्वम्॥

सत्त्वासत्त्वशब्दौ न भावाभाववचनौ, अपितर्हि शोभनत्वाशोभनत्ववचनावित्याह—**सत्त्वस्य शोभनत्वस्ये**त्यादिना। **सा द्विधे**ति।

१. 'क', २. 'र्भ', ३. 'द्दा' क. ग. पाठः. ४. 'न च शोभ', ५ 'रा' ग. पाठः.

शोभनेशोभनत्वसत्तायामेव वक्तव्यायामसत्तामुखेनाभिधानमन्यानिवृत्तिप्रयुक्ता तन्निवृत्तिरिति ख्यापनार्थम् । एवं चान्यानिवृत्तौ विधिरेव प्रकाशितो भवति । आद्यौ यथा —

"विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥"

अत्र विनयाद्यसन्निधिप्रयुक्तश्रीविरहाद्यभिधानमुखेनाशोभनत्वमुक्तम् । यथा वा —

"प्रत्यक्ता मधुनेव काननमही मौर्वीव चापच्युता
शुक्तिर्मौक्तिकवर्जितेव कविता माधुर्यहीनेव च ।
येनैकेन विना तदा न शुशुभे चालुक्यराज्यस्थितिः
सामर्थ्यं शुभजन्मनां कथयितुं कस्यास्ति वाग्विस्तरः ॥"

अत्र च विनाशब्दप्रयोगमन्तरेण विनार्थविवक्षा यथाकथञ्चिदपि निमित्तीभवति । यथा सहोक्तौ सहार्थविवक्षा ।

अभावप्रतियोगिनोः शोभनत्वाशोभनत्वयोर्भेदात् । अन्यनिवृत्तीत्यादि । अन्यथा शोभनत्वाशोभनत्वयोः स्वतस्सिद्धत्वं तदभावस्य चौपाधिकत्वं न प्रतीयेत । श्रीविरहेति । अत्र विरहशब्देन श्रियः स्थैर्यलक्षणस्य शोभनत्वस्याभावः प्रतिपाद्यते, यदविनीतं श्रीर्विरहयति । अतो ह्यस्या अस्थिरत्वप्रसिद्धिः । उद्भटेन च काव्यालङ्कारविवृतौ सत्कवि(त्व)विरहिताया विदग्धताया अस्थैर्यस्याशोभनस्य च प्रतिपादनाय निदर्शनद्वयमिति वदता का श्रीरित्यस्य श्रीरस्थिरेत्यर्थोऽभिहितः । प्रत्यक्तेति । पूर्वत्र प्रतिक्षेपार्थेन किंशब्देन शोभनत्वाभावः प्रतीयते । इह न शुशुभे इति साक्षान्निर्दिश्यते । विनाशब्दप्रयोगमिति । अत्र विनाशब्दग्रहणं निवृत्तिवाचिनो रहितादिशब्दस्याप्युपलक्षणम् । यथा सहोक्ताविति । अनुवादमुखेन सहशब्दाप्रयोगेऽपि सहार्थविवक्षायां सहोक्त्यलङ्कारत्वं दर्शयति । एवञ्च विनाश-

१. 'नत्वाभो' ग पाठ २. 'या वक्त', ३. 'द्यौ' क. ग. पाठः. ४. 'पोऽस्मिता' ख पाठः. ५. 'न नि', ६. 'णांप नि', ७. 'था दि स' क. ग. पाठः.
८. 'र्' क. पाठः.

एवञ्च —

"निरर्थकं जन्म गतं नलिन्या
यया न दृष्टं तुहिनांशुबिम्बम्।
उत्पत्तिरिन्दोरपि निष्फलैव
दृष्टा विबुद्धा नलिनी न येन॥"

इत्यादौ विनोक्तिरेव। तुहिनांशुदर्शनं विना नलिनीजन्मनोऽशोभनत्वप्रतीतेः। इयं च परस्परविनोक्तिभङ्ग्या चमत्कारातिशयकृत्। यथोदाहृते विषये। द्वितीया यथा —

"मृगलोचनया विना विचित्र-
व्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं
सुहृदा तेन विना नरेन्द्रसूनुः॥"

अत्राशोभनत्वाभावः शोभनपदार्थप्रक्षेपभङ्ग्योक्तः। सैषा द्विधा विनोक्तिः॥

अधुना विशेषणविच्छित्त्याश्रयेणालङ्कारद्वयमुच्यते। तत्रादौ विशेषणसाम्यावष्टम्भेन समासोक्तिमाह —

ब्दाप्रयोगेऽपि विनार्थविवक्षाया निमित्तत्वे। विनोक्तिरेवेति। विनाशब्दाद्यभावेऽपीति शेषः। यद्वा अप्रस्तुतसरूपस्तुतौ सत्यामपि विनोक्तावेव कवेः संरम्भादिति भावः। अशोभनत्वप्रतीतेः शोभनत्वाभावप्रतीतेरित्यर्थः। **इयं चेति**। विनाशब्दाप्रयोगेऽपि विनार्थविवक्षारूपा। द्वितीया अशोभनत्वाभावरूपा। **मृगलोचनयेत्यादि**। नन्वत्र शोभनत्वमेव प्रतीयते, न त्वशोभनत्वस्याभाव इत्यत आह — **अत्रेत्यादि**। अशोभनत्वस्य कातर्यदुर्हृदयत्वलक्षणस्याभावः। शोभनश्च पदार्थः प्रागल्भ्यसुन्दराशयत्वलक्षणः। सैषा द्विधेत्युपसंहारेण विनाशब्दाभावेऽपि विनार्थविवक्षादीनामनयोरेवान्तर्भावाद् भेदान्तरत्वं निरस्यति॥

१. 'निद्रा न' क. ख. पाठः. २. 'त्वविवक्षारू' ग पाठ.

**विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः॥३१॥**

इह प्रस्तुताप्रस्तुतानां क्वचिद् वाच्यत्वं क्वचिद् गम्यत्वमिति द्वैतम्[१]। वाच्यत्वं च श्लेषनिर्देशभङ्ग्या पृथगुपादानेन वेत्यपि द्वैतम्[२]। एतद् द्विभेदमपि श्लेषालङ्कारस्य विषयः। गम्यत्वं तु प्रस्तुतनिष्ठमप्रस्तुतप्रशंसाविषयः[३]। अप्रस्तुतनिष्ठं तु समासोक्तेर्गोचरः। तत्र[४] च निमित्तं विशेषणसाम्यम्। विशेष्यस्यापि साम्ये श्लेषप्राप्तेः। विशेषणसाम्यवशाद्धि[५] प्रतीयमानमप्रस्तुतं प्रस्तुतावच्छेदकत्वेन प्रतीयते। अवच्छेदकत्वाच्च व्यवहारसमारोपो न तु रूपसमारोपः। रूपसमारोपे त्ववच्छादितत्वेन प्रकृतस्य तद्रूपरूपित्वाद् रूपक-

अलङ्कारद्वयमिति। समासोक्तिपरिकररूपम्। विशेषणविच्छित्तिश्च क्वचित् साम्यवशात् क्वचित् साभिप्रायत्ववशात्। **विशेषणसाम्यादित्यादि**। अप्रस्तुतस्य गम्यत्व इत्यनेन सारूप्यनिमित्तमप्रस्तुतप्रशंसाभेदं व्यवच्छिनत्ति। इहेत्यादिना श्लेषाप्रस्तुतप्रशंसासमासोक्तीनां विषयविभागं दर्शयति। इह विशेषणसाम्यविषये। एतद् द्विभेदमिति। प्रकारद्वयविशिष्टं वाच्यत्वम्। तत्र चेति। अप्रस्तुतस्य गम्यत्वे। **श्लेषप्राप्तेरिति**। एतत् समासोक्तिव्यतिरिक्तप्राप्तिमात्रोपलक्षणम्। प्रस्तुताप्रस्तुतनिष्ठत्वे विशेषणविशेष्योभयसाम्ये शब्दशक्तिमूलध्वनिताप्राप्तेः। एतच्च वक्ष्यति 'विशेषस्यापि साम्ये त्वर्थप्रकरणादी'त्यादिना। अथवोपादानकृतं साम्यमिह विवक्षितम्। प्रस्तुतवदप्रस्तुतस्यापि पृथगुपादान इत्यर्थः। प्रस्तुतावच्छेदकत्वेन प्रस्तुतविशेषकत्वेन। अवच्छेदकत्वाच्चेत्यादि। तथा उपोढरागेणेत्यादौ मुखग्रहणादिलक्षणं नायकव्यवहारमात्रं समारोप्यते, न तु नायकरूपम। अवच्छादितत्वेन उपरक्तत्वेन। प्रकृतस्य

१. 'द्वयमेव', २. [illegible], ३. 'यः', ४. 'अत्र', ६. 'शात् प्र' ग. घ. पाठ [illegible] 'पृथगुपादानेन' ग. पाठ ८. 'प्रस्ते', ९. 'ति।' ख. पाठ

मेव। तच्च विशेषणसाम्यं श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च त्रिधा भवति। तत्र श्लिष्टतया यथा—

"उपोढरागेण विलोलतारकं
तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद् गलितं न लक्षितम्॥"

अत्र निशाशशिनोः श्लिष्टविशेषणमहिम्ना नायकव्यवहारप्रतीतिः। अपरित्यक्तस्वरूपयोर्निशाशशिनोर्नायकताख्यधर्म-

---

मुखादेः। तद्रूपरूपित्वाद् अप्रकृतरूपेण रूपवत्त्वात्। तच्चेति। निमित्तभूतम्। श्लिष्टतयेति। अर्थभेदेऽपि शब्दस्वरूपस्यानुगतत्वात्। साधारण्येनेति। अर्थस्वरूपस्यैव उभयत्रानुवृत्तत्वात्। औपम्यगर्भत्वेनेति। प्रस्तुताप्रस्तुतसम्बन्धिनोः पदार्थयोः परस्परमुपमानोपमेयभाववशेनोभयविशेषणत्वम्। उपोढरागेणेत्यादि। रागो लौहित्यमनुरागश्च। तस्य वहनीयत्वेन गुरुतमत्वं सूच्यते। विलोलतारकं विलोलनक्षत्रं विलोलकनीनिकं च। तथेति। झटिति कामसूत्रोक्तचुम्बनादिप्रकारातिशयेन च, तादृशस्यैव चुम्बनादेस्तारकातरलतादिहेतुत्वात्। गृहीतम् आक्रान्तं चुम्बितं च। मुखमारम्भो वक्त्रं च। समस्तं सकलं मिश्रितं च। तिमिरांशुकं तिमिरमंशवश्च रविसम्बन्धिनः, तिमिरसदृशं प्रौढाङ्गनोचितं नीलवसनं च। तया निशया हेतुभूतया, लक्षणक्रियां प्रति कर्तृभूतया नायिकया च। पुरोऽपीति। प्राच्यामग्रतश्च। रागात् सन्ध्यारुणिम्नः। अनन्तरमिति शेषः। अनुरागादिसेव। गलितं प्रशान्तं भ्रष्टं च। लक्षितं, न केनचिदित्यर्थात्। प्रभातसन्ध्यानन्तरं प्राच्यां गलितमपि तिमिरमिश्रं सूर्यांशुजालमुदयरक्तेन्दुकरसम्पृक्तानेशतमोयुक्तत्वाद् रात्रिमुखस्य गलितत्वेन न लक्षितमद्यापि स्थितमिवाभूदित्यर्थः। नायिकापक्षे गलितमपि न तावत् प्रत्यक्षेणानवगतमेव, अपितूहीतमपि नेत्यर्थः। ननु कथमत्र नायकव्यवहारप्रतीतिः, न तु नायकत्वारोप

१. 'उच्चरि' ग. ग. पाठ. २ 'वेन क' ग पाठ. ३. 'नर्त' ग. ग. पाठ, ४. 'तनी' ग पाठ, ५ 'र ग' ग. ग पाठ. ६. 'प्यतीव' ग. पाठ,

विशिष्टयोः प्रतीतेः । साधारण्येन यथा —

"तन्वी मनोरमा बाला लोलाक्षी पुष्पहासिनी ।
विकासमेति सुभग! भवद्दर्शनमात्रतः ॥"

अत्र तन्वीत्यादिविशेषणसाम्याल्लोलाक्ष्या लताव्यवहारप्रतीतिः । अत्र च लतैकगामिविकासाख्यधर्मसमारोपः कारणम् । अन्यथा विशेषणसाम्यमात्रेण नियतस्य लताव्यवहारस्याप्रतीतेः । विकासः[1] प्रकृते[2] तूपचरितो ज्ञेयः । एवं कार्यसमारोपेऽपि ज्ञेयम् । इयं च[3] पूर्वापेक्षयास्फुटा । औपम्यगर्भत्वेन[4] यथा —

"दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ॥"

अत्र दन्तप्रभाः पुष्पाणीवेति सुवेषत्ववशादुपमागर्भत्वेन कृते

---

इत्यत आह — अपरित्यक्तेति । रूपके हि मुखादीनां स्वरूपपरित्यागेन कमलादिरूपमेव प्राधान्येन प्रतीयते । तन्वीत्यादि । पुष्पहासिनीत्यत्र यद्यपि पुष्पवद्धसितशीला पुष्पहासवतीति चार्थद्वयप्रतीतिः, तथापि पुष्पशब्दस्य हसतेश्चार्थद्वयासंभवात् साधारण्यम् । प्रकृते तूपचरित इति । शोभाजनकत्वसाम्याल्लोलाक्ष्या हर्षो विकास उच्यते । एवं कार्येत्यादि । कार्यसमारोपसहकारिणि विशेषणसाधारण्य इत्यर्थः । इयं च पूर्वापेक्षयास्फुटेति । तत्र विशेषणानामर्थद्वयवाचकतयाप्रकृतसाधारणानां बहूनां धर्माणां निर्देशादप्रकृतस्य स्फुटा प्रतीतिः, इह पुनरन्यथेत्यस्फुटत्वम् । अन्ये तु पूर्वापेक्षया तन्वीत्यादिविशेषणसाधारण्यमात्रस्य निमित्तत्वेनापेक्षया अस्फुटेति धर्मसमारोपाद्यनङ्गीकारेऽनिष्टं दर्शितमित्याहुः । दन्तप्रभाः पुष्पाणीवेति । व्याघ्रादेराकृतिगणत्वात् समासः । सुवेषत्ववशादित्यनेनोपमापरिग्रहे साधकमाह । सुवेषत्वं प्रति दन्तप्रभा-

---

१ 'गरतु प्र', २ 'त उप' ग. पाठ ३. 'च समासोक्तिः पू' मूलपाठः. ४. 'त्वे य' क. ग. पाठः. ५. 'भाग' क. ग. पाठः.

समासे पश्चाद् दन्तप्रभासदृशैः पुष्पैश्चितेति समासान्तराश्रयेण समानविशेषणमाहात्म्याल्लताव्यवहारप्रतीतिः । अत्रैव परीता हरिणेक्षणा इति पाठे उपमारूपकसाधकाभावात् सङ्करसमासाश्रयेण कृते योजने पश्चात् पूर्ववत् समासान्तरमहिम्ना लताप्रतीतिर्ज्ञेया । रूपकगर्भत्वेन तु समासान्तराश्रयेणात्[3] समानविशेषणत्वं भवदपि न समासोक्तेः प्रयोजकम् । एकदेशविवर्तिरूपकमुखेनैवार्थान्तरप्रतीतेस्तस्या वैयर्थ्यात् । न च प्राङ्निदर्शितोपमासङ्करविषय एव न्यायः । उपमासङ्करयोरेकदेशविवर्तिनोरभावात् । तच्चैकदेशविवर्तिरूपकमश्लेषेण श्लेषेण च भवतीति द्विविधम् । अश्लिष्टं यथा—

"निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किन्नु वान्तश्चन्द्रो मयेत्यार्ततरं ररास ॥"

पाणिकेशपाशानामेव साधकत्वात् । दन्तप्रभासदृशैः पुष्पैरिति । शाकपार्थिवादित्वात् समास इत्याहुः । सङ्करसमासाश्रयेणेति । दन्तप्रभाः पुष्पाणीवेति दन्तप्रभा एव पुष्पाणीत्यनियमेन । पूर्ववदिति । दन्तप्रभासदृशैरित्य(र्थः? र्थे) । ननु विशेषणसाम्यस्यौपम्यगर्भत्ववद् रूपकगर्भत्वमपि निमित्तं किं न स्यादित्यत आह — रूपकगर्भत्वेनेत्यादिना । समासान्तराश्रयणादिति । सदृशादिमध्यमपदलोपवत्समासापेक्षया रूपकसमासस्य समासान्तरत्वम् । तस्याः समासोक्तेः । तुल्यन्यायतयौपम्यगर्भाया अपि समासोक्तेः प्रतिक्षेपो नाशङ्कनीय इत्याह -- न चेत्यादिना । एकदेशविवर्तिरूपकस्यैव समासोक्तिबुद्धिं व्यावर्तयितुमनान्तरभेदप्रदर्शनपूर्वकमुदाहरणं प्रदर्शयति —

१ 'न ग', २ 'ख ग' क ग दार्' ग पाठः. ३. 'पूर्व' ख. ग. पाठ ४. 'रि' क पाठ.

अत्र निरीक्षणानुगुण्याद् विद्युन्नयनैरिति रूपके सिद्धे पयोदस्य द्रष्टृपुरुषरूपणमार्ततरं ररासेत्यत्र प्रतीयमानोत्प्रेक्षाया निमित्ततां भजते। श्लिष्टं यथा—

"मदनगणनास्थाने लेख्यप्रपञ्चमुदञ्चयन्
विचकिलबृहत्पत्रन्यस्तद्विरेफमषीलवैः।
कुटिललिपिभिः कं कायस्थं न नाम विसूत्रयन्
व्यधित विरहिप्राणेष्वायव्ययात्रधिकं मधुः॥"

---

तच्चैकदेशेत्यादिना। निरीक्षणानुगुण्यादित्यनेन रूपकपरिग्रहे साधकमुक्तम्। अत्र चावयवयोर्विद्युन्नयनयो रूपणस्य शाब्दत्वादवयविनोः पयोदद्रष्टृपुरुषयोश्चार्थत्वादेकदेशविवर्तित्वम्। आर्ततरं ररासेत्यत्रेत्यादि। यद्यपि रसितमात्रं पयोदस्य सिद्धं, तथापि चन्द्रगमनशङ्कानिमित्तकार्तिविशिष्टस्य तस्यासिद्धत्वादुत्प्रेक्ष्यत्वम्। आर्तेश्च चेतनधर्मत्वात् पयोदमात्रेऽसम्भवाद् द्रष्टृपुरुषत्वारोपः। अत्र चारोपितपुरुषत्वः पयोदो विषयः। विशिष्टं रसितं विषयी। चन्द्रसदृशाभिसारिकामुखदर्शनं हेतुर्निमित्तम्। यद्वा धारानिपातैरित्यादिबुद्धिरूपो हेतुर्विषयी। पूर्वक एव विषयः। विशिष्टरसितलक्षणं कार्यं निमित्तम्। मदनगणनेत्यादि। अत्र मधुः पिशुनत्वेन रूप्यते। स यथा कस्यचिद् राज्ञो गणनास्थानं गत्वा लेख्यप्रपञ्चमुत्क्षिप्य तद्गतैरेवाक्षरैरितरकायस्थवर्गमशेषं व्याकुलीकृत्य राजसम्बन्धिद्रव्याणामायव्यययोः स्वयमधिकारितामासादयति, एवं मधुरपि मल्लिकापत्रस्थैर्द्विरेफैः सकलान् कायस्थान् शरीरस्थान् प्राणिनो व्याकुलीकुर्वन् विरहिप्राणेषु मूर्छागमेऽपहारलक्षणमायं तदपगमे तत्प्रत्यर्पणलक्षणं व्ययं च विहितवान्। अन्वयस्तु मदनगणनास्थाने लेख्यप्रपञ्चमुदञ्चयन् मधुः विचकिलबृहत्पत्रन्यस्तद्विरेफमषीलवैः कुटिललिपिभिः कं कायस्थं न नाम विसूत्रयन्नधिकं विरहिप्राणेष्वायव्ययौ व्यधित। अन्ये तु विरहिप्राणेषु कं कायस्थं विसूत्रयन् आयव्ययाधिकमायव्ययावधी यस्य तं न नाम व्यधितेत्यन्वयं कुर्वन्तः सकलान् विरहिप्राणान्शिथिलीकुर्वन् मूर्छागमतद-

१. 'प्रे ररास' ख. ग. पाठः. २. 'त्रागे' ग. पाठः ३ 'विग्रल' ग. पाठः.

अत्र हि पत्त्रलिपिकायस्थशब्देषु श्लेषगर्भं रूपकं द्विरेफमषीलवैरित्येतद्रूपकनिमित्तम् । अस्य च प्रचुरः प्रयोगविषय इति नात्र समासोक्तिबुद्धिः कार्या । तदेवं श्लिष्टविशेषणसमुत्थापितैका । साधारणविशेषणसमुत्थापिता तु धर्मकार्यसमारोपाभ्यां द्विभेदा । औपम्यगर्भविशेषणसमुत्थापितोपमासङ्करसमासाभ्यां द्विभेदा । रूपकसमासाश्रयेण तु भेदद्वयमस्या न विषयः । तदेवं पञ्चप्रकारा समासोक्तिः । इत्थं च शुद्धकार्यसमारोपेण विशेषणसाम्येनोभयमयत्वेन च प्रथमं त्रिधा समासोक्तिः । विशेषणसाम्यं पञ्चप्रकारं निर्णीतम् ।

---

परमक्षणिकत्ववशेनायव्ययावधिकान् गमागमावधिकानिति प्रकृतमर्थं, सकलकायस्थान् विसूत्रयन् अवरोपयन् आयव्ययावधिकं विहितवानित्यप्रकृतं चाहुः । अत्र द्विरेफादेर्मषीलवाद्यारोपस्य शाब्दत्वाद् मधोः पिशुनत्वारोपस्य चार्थत्वादेकदेशविवर्तित्वम् । पत्त्रलिपीत्यादि । पत्त्रादयः शब्दा दलमात्रतालीपत्त्ररेखामात्रलिखिताक्षरसंस्थानशरीरस्थगणकलक्षणोभयार्थवाचिनः । रूपकनिमित्तमिति । न्यस्तत्वादिसाधकवशादवगतं द्विरेफमषीलवैरिति रूपकं निमित्तं यस्येति बहुव्रीहिः, न तत्पुरुषः, पत्त्रादिशब्दानामर्थद्वयावभासने निमित्तान्तराभावेन श्लेषस्य पूर्वसिद्धत्वाभावाद्, 'भ्रमिमि'त्यादावुक्तन्यायेन श्लेषस्यैव प्राप्तेश्च, अस्यैकदेशविवर्तिनः समासोक्तिव्यतिरिक्तेऽपि विषये दर्शनात् । साधारणेत्यादि । तत्र धर्मसमारोप उदाहृतः । कार्यसमारोपे यथा —

सर्वानवद्यं प्रतिजानते त्वां सन्तः कथं नाम यदुप्रवीर ! ।
करे गृहीता भवता कृपाणी कण्ठग्रहं यत् तनुते परेषाम् ॥

अत्र कृपाण्या दुष्टनायिकात्वप्रतीतिः । करे गृहीतेति साधारणं विशेषणम् । कण्ठग्रहणलक्षणकार्यसमारोपश्च द्रष्टव्यः । उभयमयत्वेनेति । कार्यसमा-

---

१. 'रथ शु' क. ख. पाठः. २ 'ते', ३. 'वचनाः । ए' ख. ग. पाठः. ४. 'इन' ख. पाठः.

अत्र निरीक्षणानुगुण्याद् विद्युन्नयनैरिति रूपके सिद्धे पयोदस्य द्रष्टृपुरुषरूपणमार्ततरं ररासेत्यत्र प्रतीयमानोत्प्रेक्षाया निमित्ततां भजते । श्लिष्टं यथा—

"मदनगणनास्थाने लेख्यप्रपञ्चमुदञ्चयन्
विचकिलबृहत्पत्रन्यस्तद्विरेफमपीलवैः ।
कुटिललिपिभिः कं कायस्थं न नाम विसूत्रयन्
व्यधित विरहिप्राणेष्वायव्ययावधिकं मधुः ॥"

तत्रैकदेशेत्यादिना । निरीक्षणानुगुण्यादित्यनेन रूपकपरिग्रहे साधकमुक्तम् । अत्र चावयवयोर्विद्युन्नयनयो रूपणस्य शाब्दत्वादवयविनोः पयोदद्रष्टृपुरुषयोश्चार्थत्वादेकदेशविवर्तित्वम् । आर्ततरं ररासेत्यत्रेत्यादि । यद्यपि रसितमात्रं पयोदस्य सिद्धं, तथापि चन्द्रवमनशङ्कानिमित्तकार्तिविशिष्टस्य तस्यासिद्धत्वादुत्प्रेक्ष्यत्वम् । आर्तेश्च चेतनधर्मत्वात् पयोदमात्रेऽसम्भवाद् द्रष्टृपुरुषत्वारोपः । अत्र चारोपितपुरुषत्वः पयोदो विषयः । विशिष्टं रसितं विषयी । चन्द्रसदृशाभिसारिकामुखदर्शनं हेतुर्निमित्तम् । यद्वा धारानिपातैरित्यादिबुद्धिरूपो हेतुर्विषयी । पूर्वोक्त एव विषयः । विशिष्टरसितलक्षणं कार्यं निमित्तम् । मदनगणनेत्यादि । अत्र मधुः पिशुनत्वेन रूप्यते । स यथा कस्यचिद् राज्ञो गणनास्थानं गत्वा लेख्यप्रपञ्चमुत्क्षिप्य तदन्तरेवाक्षरैरितरकायस्थवर्गमशेषं व्याकुलीकृत्य राजसम्बन्धिद्रव्याणामायव्यययोः स्वयमधिकारितामासादयति, एवं मधुरपि मल्लिकापत्रस्थैर्द्विरेफैः सकलान् कायस्थान् शरीरस्थान् प्राणिनो व्याकुलीकुर्वन् विरहिप्राणेषु मूर्छागमेऽपहारलक्षणमायं तदपगमे तत्प्रत्यर्पणलक्षणं व्ययं च विहितवान् । अन्वयस्तु मदनगणनास्थाने लेख्यप्रपञ्चमुदञ्चयन् मधुः विचकिलबृहत्पत्रन्यस्तद्विरेफमपीलवैः कुटिललिपिभिः कं कायस्थं न नाम विसूत्रयन्नधिकं विरहिप्राणेष्वायव्ययौ व्यधित । अन्ये तु विरहिप्राणेषु कं कायस्थं विसूत्रयन् आयव्ययावधिकमायव्ययावधी यस्य तं न नाम व्यधितेत्यन्वयं कुर्वन्तः सकलान् विरहिप्राणान्शिथिलीकुर्वन् मूर्छागमतद-

१. 'प्रे रस' ग. घ. पाठ. २. 'नागे' ग. पाठ ३. 'शिथल' ग. पाठः.

अत्र हि पत्रलिपिकायस्थशब्देषु श्लेषगर्भं रूपकं द्विरेफमषीलवैरित्येतद्रूपकनिमित्तम् । अस्य च प्रचुरः प्रयोगविषय इति नात्र समासोक्तिबुद्धिः कार्या । तदेवं श्लिष्टविशेषणसमुत्थापितैका । साधारणविशेषणसमुत्थापिता तु धर्मकार्यसमारोपाभ्यां द्विभेदा । औपम्यगर्भविशेषणसमुत्थापितोपमासङ्करसमासाभ्यां द्विभेदा । रूपकसमासाश्रयेण तु भेदद्वयमस्या न विषयः । तदेवं पञ्चप्रकारा समासोक्तिः । इत्थं च शुद्धकार्यसमारोपेण विशेषणसाम्येनोभयमयत्वेन च प्रथमं त्रिधा समासोक्तिः । विशेषणसाम्यं पञ्चप्रकारं निर्णीतम् ।

---

पगमक्षणिकत्ववशेनायव्ययावधिकान् गमागमावधिकानिति प्रकृतमर्थं, सकलकायस्थान् विसूत्रयन् अवरोपयन् आयव्ययावधिकं विहितवानित्यप्रकृतं चाहुः । अत्र द्विरेफादेर्मषीलवाद्यारोपस्य शाब्दत्वाद् मधोः पिशुनत्वारोपस्य चार्थत्वादेकदेशविवर्तित्वम् । पत्रलिपीत्यादि । पत्रादयः शब्दा दलमात्रतालीपत्ररेखामात्रलिखिताक्षरसंस्थानशरीरस्थगणकलक्षणोभयार्थवाचिनः । रूपकनिमित्तमिति । न्यस्तत्वादिसाधकवशादवगतं द्विरेफमषीलवैरिति रूपकं निमित्तं यस्येति बहुव्रीहिः, न तत्पुरुषः, पत्रादिशब्दानामर्थद्वयावभासने निमित्तान्तराभावेन श्लेषस्य पूर्वसिद्धत्वाभावाद्, 'भ्रमिमि'त्यादावुक्तन्यायेन श्लेषस्यैव प्राप्तेश्च, अस्यैकदेशविवर्तिनः समासोक्तिव्यतिरिक्तेऽपि विषये दर्शनात् । साधारणेत्यादि । तत्र धर्मसमारोप उदाहृतः । कार्यसमारोपे यथा —

सर्वानवद्यं प्रतिजानते त्वां सन्तः कथं नाम यदुप्रवीर ! ।
करे गृहीता भवता कृपाणी कण्ठग्रहं यत् तनुते परेषाम् ॥

अत्र कृपाण्या दुष्टनायिकात्वप्रतीतिः । करे गृहीतेति साधारणं विशेषणम् । कण्ठग्रहणलक्षणकार्यसमारोपश्च द्रष्टव्यः । उभयमयत्वेनेति । कार्यसमा-

---

१. 'स्य त्रु' क. ख. पाठः. २ 'ले', ३. 'वचनाः । रू' ख. ग. पाठः. ४. 'रूप' ख. पाठः.

अत्र लावण्ये लौकिके वस्तुनि मीमांसाशास्त्रप्रसिद्धवस्तुसमारोपः[1]। एवं[2] तर्कायुर्वेदज्योतिश्शास्त्रादिप्रसिद्धवस्तुसमारोपो बोद्धव्यः । यथा—

"दशवक्त्रविवादेऽस्मिन्नुत्खातखरदूषणः ।
स्वपक्षकक्ष्यां वीरोऽयं[3] दूरमारोपयिष्यति ॥"

"स्वपक्षलीलाललितैरुपोढ-
हेतौ स्मरे दर्शयतो विशेषम् ।
मानं निराकर्तुमशेषयूनां
पिकस्य पाण्डित्यमखण्डमासीत् ॥"

---

साक्षात्करणं व्यावर्तकधर्मश्च । अत्र श्लेषवशेन विशेषणसाम्यं निमित्तम् । **मीमांसाशास्त्रेति** । भाट्टदर्शनप्रसिद्धस्य प्रमाणषट्कस्य निषेध्यत्वात् । तत्र सीमानमित्यादिना प्रत्यक्षस्य निषेधः, नान्येनेत्यनुमानस्य, न स्पृष्ट-मित्यागमस्य, दृष्टोपमानमित्युपमानस्य, अर्थादापतितमित्यर्थापत्तेः, न च न यदित्यभावस्य । अथवा मीमांसाशास्त्रप्रसिद्धेत्यनेनोत्तरमीमांसाप्रसिद्ध-सकलप्रमाणागोचरब्रह्मलक्षणवस्तूच्यते । अत्र सीमानं न जगामेत्यादिना सर्वत्र कार्यसमारोपः । न स्पृष्टमित्यादौ विशेषणसाधारण्यं वा । दशवक्त्रेत्यादि । उत्खातखरदूषणः निहतखरदूषणाख्यराक्षसः निरस्तदुरुत्तरा-सिद्धविरुद्धादिश्च । स्वपक्षः स्वबन्धुः स्वसिद्धान्तश्च । अत्र रामे प्रतिवा-द्युक्तदूषणनिरासस्वपक्षस्थापनलक्षणवादिव्यवहारः समारोप्यते । स्वपक्षे-त्यादि । मानमभिमानं प्रमाणं च । अत्र कोकिले वावदूकव्यवहारसमारोपः । यथा वावदूक इतरतार्किकप्रमाणनिराकरणाय निर्दिष्टसाधने वाक्ये स्वप-क्षानुकूलैर्वाक्यैः साध्यसिद्धिलक्षणं विशेषं दर्शयन् अखण्डितपाण्डित्यो भ-वति, एवं कोकिलोऽप्यात्मगरुलीलाभिः प्राप्तमधुमासलक्षणस्योदयहेतौ (कारणे ?) अधिगतशङ्के वा स्मरे उत्कर्षं दर्शयन् यूनामभिमानं निराच-

---

१. 'पः। बोद्धव्यः। ए', २. 'व च त', ३. 'सौ' क. ग. पाठः. ४. 'वश
५. 'न गा', ६. 'भ', ७. 'रा', ८ 'पः। द' ख. पाठः

अत्र लौकिके वस्तुनि तर्कशास्त्रप्रसिद्धवस्तुसमारोपः । पाण्डित्यशब्दः प्रकृते लक्षणया व्याख्येयः । तथा —

"मन्दमग्निमधुरर्यमोपला दर्शितश्वयथु चाभवत् तमः ।
दृष्टयस्तिमिरजं सिषेविरे दोषमोषधिपतेरसन्निधौ ॥"

अत्रायुर्वेदप्रसिद्धवस्तुसमारोपः ।

"गण्डान्ते मददन्तिनां प्रहरतः क्ष्मामण्डले वै धृते
रक्षामाददतः क्रुधा विदधतो लाटेषु यात्रोत्सवम् ।
पूर्वामाश्रयतो गतिं शुभकरीमासेवमानस्य ते
वर्धन्ते विजयश्रियः किमिव न श्रेयस्विनां मङ्गलम् ॥"

अत्र ज्योतिःशास्त्रप्रसिद्धवस्तुसमारोपः ।

"प्रसर्पत्तात्पर्यैरपि सदनुमानैकरसिकै-
रपि ज्ञेयो नो यः परिमितगतित्वं परिजहत् ।
अपूर्वव्यापारो गुरुवर ! बुधैरध्यवसितो
न वाच्यो नो लक्ष्यस्तव स हृदयस्थो गुणगणः ॥"

---

कार । अत्र श्लिष्टविशेषणत्वम् । लक्षणयेति । प्रस्तुतार्थनिर्वहणसामर्थ्यं लक्ष्यते । उदाहरणद्वयप्रदर्शनं जल्पवितण्डालक्षणकथाभेदोपाधिकतर्कभेदप्रदर्शनार्थम् । तत्र पूर्वत्र जल्पः, उत्तरत्र वितण्डेत्याहुः । मन्दमित्यादि । अग्निं सूर्यतेजस्सम्पर्कादुत्थितम् । तस्य च मान्द्यमादित्यस्य स्फुटमनुदितत्वात् । अन्यत्र वैश्वानरोऽग्निः । श्वयथुः वृद्धिः शोफाख्यो व्याधिश्च । तिमिरं तमः काचस्य पूर्वावस्था च । ओषधिपतिश्चन्द्रः सन्निहितौषधिको भिषक् च । अत्र मन्दमग्निमधुरिति कार्यसमारोपः । दर्शितश्वयथ्वित्यादौ श्लिष्टविशेषणत्वम् । गण्डान्त इत्यादि । गण्डान्ते कपोलान्ते नक्षत्रविशेषसन्धौ च । क्ष्मामण्डले वै धृते । वैशब्दः प्रसिद्धौ । धृते भूमण्डले राशिमण्डलान्तर्वर्तिनि वैधृतनाम्नि योगे च । लाटेषु देशविशेषे व्यतीपातभेदेषु च । पूर्वां प्राचीं दिशं पूर्वफल्गुन्याख्यं नक्षत्रं च । पूर्वामाश्रित्य जयलक्षणशुभकरीं गतिमासेवमानस्येत्यन्वयः । अत्र श्लिष्टविशेषणत्वम् । प्रसर्प-

अत्र भरतादिशास्त्रप्रसिद्धवस्तुसमारोपः । तथाहि—अत्र गुणगणगतत्वेन शृङ्गारादिरसव्यवहारः प्रतीयते । यतो रसो न तात्पर्यशक्तिज्ञेयः, नाप्यनुमानविषयः, न शब्दैरभिधाव्यापारेण वाच्यीकृतः, न लक्षणागोचरः, किन्तु विगलितवेद्यान्तरत्वेन परिहृतपारिमित्यो व्यञ्जनलक्षणापूर्वव्यापारविषयीकृतोऽनुकार्यानुकर्तृगतत्वपरिहारेण सहृदयगत इति प्रसर्पत्तात्पर्यैरित्यादिपदै रस एव प्रतीयते । एवमन्यदपि ज्ञेयम् ।

"पश्यन्ती त्रपयेव यत्र तिरयत्यात्मानमाभ्यन्तरी
यत्र त्रुट्यति मध्यमापि मधुरध्वन्युज्जिगीसारसात् ।
चाटूच्चारणचापलं वितनुतां वाक् तत्र बाह्या कथं
देव्या ते परया प्रभो ! सह रहःक्रीडादृढालिङ्गने ॥"

अत्रागमप्रसिद्धे वस्तुनि लौकिकवस्तुव्यवहारसमारोपः । लौकिकवस्तुव्यवहारश्च रसादिभेदाद् बहुभेद इत्युक्तं प्राक् ।

---

त्तात्पर्यैरित्यादि । अत्र सर्वत्रापि विशेषणसाधारण्यम् । अपूर्वव्यापारो लक्ष्य इत्यादौ व्यापारादिशब्दानामुत्साहार्थप्रतिपादनशक्त्युन्नेयरसलक्षणागम्यत्वलक्षणार्थद्वयवाचित्वात् श्लिष्टविशेषणत्वं वा । गुरुतर । तत्र स हृदयस्थो बुधैरपूर्वव्यापारः गुणान्तरव्यापारातिशायिव्यापार इत्यध्यवसित । पश्यन्तीत्यादि । पश्यमादितन्नात् पश्यन्त्या आभ्यन्तरत्वम् । मध्यमा वक्तृबुद्धिसंस्था वागनस्था । बाह्या वसरी । परया सूक्ष्मया । अत्रागमप्रसिद्धेत्यादि । यथा कस्मिंश्चिद् राजनि वल्लभतमया देव्या सह क्रीडति अन्तरङ्गभूता योषित् लज्जया न प्रकाशीभवति, मध्यमा तूष्णीमास्ते, बाह्याया का कथा, एव परे ब्रह्मणि सूक्ष्मामात्रगोचरीभूते पश्यन्त्यादयस्तद्विषये स्वस्वकार्यं नारभन्ते । अत्र तिरयतीत्यादौ कार्यसमारोपः । आभ्य-

---

१ 'न । र', २ 'युक्तिर्ज्ञेय ३ द्दा' क ख पाठ ४ 'ण वा', ५ 'वा । प ग पाठ ६ मा ध्रु' क पाठ

तत्र शुद्धकार्यसमारोपे कार्यस्य विशेषणत्वमौपचारिकमाश्रित्य विशेषणसाम्यादिति लक्षणं पूर्वशास्त्रानुसारेण विहितं यथाकथञ्चिद् योज्यम् । इह तु—

"ऐन्द्रं धनुः पाण्डुपयोधरेण शरद् दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥"

अस्ति तावद् रविशशिनोर्नायकत्वप्रतीतिः । न चात्र विशेषणसाम्यमिति सा कुतस्त्या । प्रसादयन्ती सकलङ्कमिन्दुमिति विशेषणसाम्याच्छरदो नायिकात्वप्रतीतौ तदानुगुण्यात् तयोः समासोक्त्या नायकत्वप्रतीतिरिति चेद्, आर्द्रनखक्षताभमैन्द्रं धनुर्दधानेत्येतद्विशेषणं कथं साम्येन निर्दिष्टम् । न चैकदेशविवर्तिन्युपमोक्ता, यत्सामर्थ्यान्नायकत्व-

न्तरीत्यादौ विशेषणसाधारण्यम् । ननु "विलिखति कुचावि"त्यादौ विशेषणसाम्याभावात् कथं समासोक्तित्वम्, अत आह—तत्र शुद्धकार्येति । **औपचारिकमिति** । उपचारस्य निमित्तमत्र वर्तमानत्वम् । **पूर्वशास्त्रेति** । उद्भटादिमतानुसारेण । कश्चिदन्ये आक्षेपपूर्वकं समासोक्तित्वं स्थापयति—इह त्वित्यादिना । विशेषणसाम्यपूर्वकं दूषणीयत्वेन नातिसुकरत्वाच्छरदो नायिकात्वप्रतीतिं पश्चाद् दूषयिष्यन् विशेषणसाम्यस्पर्शविरहादतिसुकरत्वेन रविशशिनोर्नायकत्वप्रतीतिं सूचीकटाहन्यायेन प्रतिक्षिपति—**अस्ति तावदित्यादिना** । समासोक्तिं हेतुत्वेनाशङ्कते—**प्रसादयन्तीत्यादि** । प्रसादस्य विशदीकरणानुनयलक्षणोभयार्थत्वात् । **आर्द्रनखक्षताभमित्यादि** । यद्यपि प्रसादयन्तीति विशेषणं समानं, तथापि विशेषणान्तरस्यासमानत्वात् तन्मूलभूतापि शरदो नायिकात्वप्रतीतिर्नास्तीत्यर्थः । इन्द्रधनुर्नखक्षतयोरौपम्यस्य शाब्दत्वात् शरदो नायिकायाश्चार्थत्वादेकदेशविवर्त्युपमाशङ्का न कार्येत्याह—**न चेत्यादि** । उपमाप्रभेदत्वेन तस्या अलक्षि-

१ 'ज्यम् । ऐ', २. 'इत्यनास्ति', ३. 'च वि', ४ 'नि विशे', ५ 'यिकात्व' इ ख पाठ. ६ टम', ७ 'माभे' क पाठः.

प्रतीतिः स्यात् । तत्कथमत्र व्यवस्था । अत्रोच्यते । एकदेशविवर्तिन्युपमा यदि प्रतिपदं नोक्ता, तत् सा केन प्रतिषिद्धा । सामान्यलक्षणद्वारेणायातायास्तस्या अत्रापि सम्भवात् । अथात्र नोपमानत्वेन नायकत्वं प्रतीयते, अपितु रविशशिनोरेव नायकत्वेन व्यवहारप्रतीतिः । तयोरत्र नायकत्वात् । तदार्द्रनखक्षतायमित्यत्र स्थितमपि श्रुत्योपमानत्वं वस्तुपर्यालोचनयैन्द्रे धनुषि सञ्चारणीयम् । इन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतेः । यथा 'दध्ना जुहोति' इत्यादौ दध्नि सञ्चार्यते विधिः । एवमियमुपमानुप्राणिता समासोक्तिरेव । इह पुनः —

"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥"

---

तत्वादित्यर्थः । एवं समासोक्तिमेकदेशविवर्तिनीमुपमां च दूषयित्वैकदेशिमतेनैकदेशविवर्तिनीं स्थापयति — अत्रोच्यत इत्यादिना । प्रतिपदं स्वकण्ठेन । सामान्येत्यादि । उपमासामान्यलक्षणस्य साधर्म्यस्य भेदाभेदतुल्यत्वस्य च विद्यमानत्वादित्यर्थः । अथ स्वमतमाह — अथात्रेत्यादि । यस्य विशेषणस्यासमानत्वेन पूर्वं समासोक्तिः प्रतिक्षिप्ता, तस्यापि विशेष(ण)स्य साम्यमापादयितुमाह — तदार्द्रेत्यादि । श्रुत्येति । शब्दवृत्त्या । सञ्चारणीयमिति । नायिकापक्ष इति शेषः । अन्यत्र श्रुतस्याप्यर्थस्यान्यत्र सञ्चारणे शास्त्रीयं दृष्टान्तमाह — यथा दध्नेत्यादि । होमस्य शास्त्रान्तर(त्व ?)सिद्धत्वाद् दधनि विधेः सञ्चारणम् । उपमानुप्राणितेति । निमित्तभूतस्य विशेषणसाम्यस्य निष्पादनात् । अत्र नायकव्यवहारप्रतीतेरेकदेशविवर्त्युपमानङ्गीकारः, नतु सर्वथा तदभाव इत्याह — इह पुन-

---

१. 'र्थं तत्र', २ 'ध', ३. 'त्वम', ४. 'नव', ५. 'ति । य', ६. 'व॥ स' क. ख पाठः ७ 'र्थं । अथा' ख. ग. पाठ. ८. 'च', ९. 'स्य' ख पाठः.

इति सरःश्रियां नायिकात्वप्रतीतिर्न समासोक्त्या, विशेषणसाम्याभावात्। तस्माद् नायिकात्रोपमानत्वेन प्रतीयते। न तु सरःश्रीधर्मत्वेन नायिकात्वप्रतीतिरित्येकदेशविवर्तिन्युपमैवोपास्या, गत्यन्तराभावात्। यैस्तु नोक्ता, तेषामप्युपसङ्ख्येयैव[1]। यत्र तु 'केशपाशालिवृन्देन' इत्यादौ समासोक्तायामुपमायां समासान्तरेण विशेषणसाम्यं योजयितुं शक्यं, तत्रौपम्यगर्भविशेषणप्रभाविता समासोक्तिरेव युक्तेति न विरोधः कश्चित्। सा च समासोक्तिरर्थान्तरन्यासे क्वचित् समर्थ्यगतत्वेन क्वचित् समर्थकगतत्वेन[2] च भवति। क्रमेणोदाहरणं[3] यथा —

"अथोपगूढे शरदा शशाङ्के
प्रावृड् ययौ शान्ततडित्कटाक्षा।
कासां न सौभाग्यगुणोऽङ्गनानां
नष्टः परिभ्रष्टपयोधराणाम्॥"

"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः।
अनाक्रम्य जगत् कृत्स्नं नो सन्ध्यां भजते रविः॥"

अत्रोपगूढत्वेन शान्ततडित्कटाक्षत्वेन च शशाङ्कशरदोः[4] प्रावृषश्च नायकै[5]र्व्यवहारप्रतीतौ समासोक्त्यालिङ्गित एवार्थो

रित्यादि। उपसङ्ख्येयेति। उपसङ्ख्यानं नाम मूलकारेणानुक्तस्यापेक्षितस्यार्थस्य विवरणकारेण तद्वाक्यसमीपे वचनम्। ननु कथम् 'उपमासङ्करयोरेकदेशविवर्तिनोरभावाद्' इति पूर्वमुक्तम्। अत आह — यत्र[6] तु केशेत्यादि। अभाववादश्च प्रतिपदमुद्भटादिभिरलक्षितत्वात्। अस्याश्च समासोक्तेरलङ्कारान्तरापेक्षयाङ्गभावं दर्शयितुमाह — सा चेत्यादि। अत्रोपगूढेत्यादि। शशाङ्कशरद्ग्रहणं प्रावृषोऽप्युपलक्षणम्। क्वचित्तु प्रावृप-

१. 'मुप', २. 'न म', ३. 'ण य', ४. 'दोः ना', ५. 'कत्र' क. ख. पाठः. ६. 'त्र के' ख. पाठः.

विशेषरूपः सामान्याश्रयेणार्थान्तरन्यासेन समर्थ्यते। सामान्यस्य चात्र श्लेषवशादुत्थानम्। शान्ततडित्कटाक्षेत्यौपम्यगर्भं विशेषणं समासान्तराश्रयेणात्र समानम्। 'असमाप्ते'त्यादौ तु स्त्रीशब्दस्य सामान्येन स्त्रीत्वमात्राभिधानात् सामान्यरूपोऽर्थो *लिङ्गविशेषनिर्देशगर्भेण कार्योपनिबन्धेनोत्थापितया* समासोक्त्या समारोपितनायकव्यवहारेण रात्रिसन्ध्यावृत्तान्तेन विशेषरूपेण समर्थ्यते।

> "आकृष्टिवेगविगलद्भुजगेन्द्रभोग-
> निर्मोकपट्टपरिवेष्टितयाम्बुराशेः।
> मन्थव्यथाव्युपशमार्थमिवाशु यस्य
> मन्दाकिनी चिरमवेष्टत पादमूले॥"

अत्र निर्मोकपट्टापह्नवेन समारोपिताया मन्दाकिन्या यद् वस्तु-

---

श्लेति पठ्यत एव। नायकव्यवहारेत्यत्र नायकशब्देन नायको नायिका प्रतिनायिका च गृह्यते। उपगूढत्वेनोपगूहनकर्मकर्तृभूतयोः शशाङ्कशरदोर्नायकत्वं नायिकात्वं च प्रतीयते, शान्ततडित्कटाक्षत्वेन प्रावृषः प्रतिनायिकात्वम्। श्लेषवशादिति। पयोधरशब्दस्य स्तनमेघवाचित्वात्। औपम्यगर्भमिति। शरदागमेन शान्तत्वमेव तडित्कटाक्षयोरौपम्यसाधकम्। समासान्तरेति। नायिकापक्षे शान्ततडित्सदृशकटाक्षेत्याश्रयणात्। अत्र विशेषणसाम्यनिमित्तो लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः, अनाक्रम्येत्यादौ च। तत्र शुद्धकार्यसमारोपो निमित्तम्। आकृष्टीत्यादि। यस्येति मन्दरो निर्दिश्यते। मथनाकर्षणवेगगलितनिर्मोकपट्टपरिवेष्टितपर्यन्तपर्वतो मन्दरोऽम्बुराशेर्मन्थव्यथाशमनाय तत्पत्नीभूतया मन्दाकिन्या वेष्टित-

---

१ 'स्य श्ले', २ 'स्य स्त्रीमा', ३ 'पनया' क ग पाठ। ४ 'ते। शा' ग पाठ।

वृत्तेन पादमूलवेष्टनं, तच्चरणमूलवेष्टनत्वेन श्लेषमूलयातिशयोक्त्याध्यवसीयते। तत् तथाध्यवसितं मन्थव्यथाव्युपशमार्थमिवेत्युत्प्रेक्षामुत्थापयति। सोत्थाप्यमानैवाम्बुराशिमन्दाकिन्योर्भर्तृपत्नीव्यवहाराश्रयां समासोक्तिं गर्भीकरोति। एवञ्चोत्प्रेक्षासमासोक्त्योरेकः कालः। एवं 'नखक्षतानीव वनस्थलीनाम्' इत्यत्रापि वनस्थलीनां नायिकात्वव्यवहार उत्प्रेक्षानुप्रविष्टसमासोक्तिमूल एव। एवमियं समासोक्तिरनन्तप्रपञ्चेत्यनया दिशा स्वयमुत्प्रेक्ष्या॥

---

पादमूल इवेति फलितोऽर्थः। अत्र पञ्चालङ्काराः सम्भवन्ति — अपह्नुतिः श्लेषोऽतिशयोक्तिरुत्प्रेक्षा समासोक्तिश्च। तत्र न निर्मोकपट्टः पादमूलेऽवेष्टत, अपितु मन्दाकिनीत्यपह्नुतिः। अत्र च विषयस्यासत्यत्वं वस्त्वन्तररूपताभिधायिशब्दनिबन्धनम्। पादमूल इत्यत्र श्लेषः। पर्यन्तपर्वतवेष्टनचरणवेष्टनयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिः। मन्थव्यथाव्युपशमार्थमिवावेष्टतेति फलोत्प्रेक्षा। मन्थव्यथाव्युपशमार्थत्वेन सम्भावितपादमूलवेष्टनलक्षणशुद्धकार्यसमारोपनिमित्तेनाम्बुराशिमन्दाकिन्योर्भर्तृपत्नीव्यवहारसमारोपेण समासोक्तिः। तत्रापह्नुतिः श्लेषानुगृहीतातिशयोक्तिश्चोत्प्रेक्षासमासोक्त्योरङ्गभूते। उत्प्रेक्षासमासोक्त्योस्त्वेककालत्वेन पौर्वापर्याभावादङ्गाङ्गिभावाभावेनैकवाचकानुप्रवेशलक्षणः सङ्करः। गर्भीकरोतीति। अन्यथैवंविधफलोद्देशेन पादमूलवेष्टनस्य मन्दाकिन्यामचैतन्येनासम्भवात्। एकः काल इति। उभयोर्निमित्तभूतस्य विशिष्टस्य वेष्टनस्यैकत्वात्। एवं नखक्षतानीत्यादि। अत्रापि नखक्षतानां वनस्थलीमात्रेऽसम्भवाद् नखक्षतसम्बन्धाभावेन वनस्थलीनां नायिकाव्यवहारसमारोपस्य चाघटमानत्वात् स्वरूपोत्प्रेक्षासमासोक्त्योस्तुल्यकालता। अनन्तप्रपञ्चेति। असङ्करविषये सङ्करविषये च भेदानामानन्त्यात्॥

---

१ 'ले श्ल', २ 'रम', ३ 'व स', ४. 'समु' क. ग. पाठ. ५ 'गागे' ख. ग. पाठ.. ६ 'चै' क ख पाठ..

## विशेषणसाभिप्रायत्वं परिकरः ॥ ३२ ॥

विशेषणवैचित्र्यप्रस्तावादस्येह निर्देशः। विशेषणानां साभिप्रायत्वं प्रतीयमानार्थगर्भीकारः। अत एव प्रसन्नगम्भीरपदार्थत्वाद् नायं ध्वनेर्विषयः। एवञ्च प्रतीयमानांशस्य वाच्योन्मुखत्वात् परिकर इति सार्थकं नाम। यथा—

"राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग् वक्षसः॥"

अत्र राज्ञ इत्यादौ सोत्प्रासत्वपरं प्रसन्नगम्भीरपदत्वम्। एवम् 'अङ्गराज! सेनापते! राजवल्लभ! द्रोणापहासिन्! कर्ण! रक्षैनं भीमाद् दुश्शासनम्' इत्यादौ ज्ञेयम्॥

---

प्रसन्नगम्भीरपदार्थत्वादिति। वाच्यस्यैव पदार्थस्य प्रसन्नगम्भीरत्वादित्यर्थः। एतेन ध्वनित्वैनिरासकं व्यङ्ग्यस्यासौन्दर्यमुक्तम्। अत एव व्यङ्ग्येऽविश्रम्य वाच्य एव पर्यवसानं द्योतयितुं प्रतीयमानार्थगर्भीकार इत्युक्तम्। गुणीभूतव्यङ्ग्यत्वप्रसङ्गस्त्वलङ्कारत्वस्य न बाधकः समासोक्त्यादिवत्। राज्ञ इत्यादि। भ्रातुर्दुश्शासनस्यारक्षणाद् राजत्वं कार्मुकं चाकिञ्चित्करम्। तद्धन्तुरनभियोगाद् मानधनत्वमपि विपर्यस्तम्। आपदि पृथग्जनवदवस्थानात् कुरुबान्धवत्वमपि वृथैव। पाण्डववधूकेशेत्यादिनाविमृश्यकारिणोऽस्यैवंविधश्चित्रवध उचित इति व्यज्यते। अङ्गराजेत्यादि। एतावन्तं कालं दुर्योधनं विप्रलभ्य वृथैवाङ्गदेशो भुक्तः, कातरस्य भवतः सैनापत्यमप्यनुचितं, राज्ञश्च त्वद्विषयातिस्नेहो

---

१. 'शप। प', २ 'णपरन्तु प्र' क ख पाठ ३ 'ता' क पाठ, ४ 'र्य-त्वमु', ५ 'श्च' ख पाठः

## विशेष्यस्यापि साम्ये द्वयोर्वोपादाने श्लेषः ॥ ३३ ॥

केवलविशेषणसाम्यं समासोक्तावुक्तम् । विशेष्ययुक्तं विशेषणसाम्यं त्वधिकृत्येदमुच्यते । तत्र द्वयोः प्राकरणिकयोः अप्राकरणिकयोः प्राकरणिकाप्राकरणिकयोर्वा श्लिष्टपदोपनिबन्धे श्लेषः । तत्राद्यं प्रकारद्वयं विशेषणविशेष्यसाम्य एव भवति । तृतीयस्तु प्रकारो विशेषणसाम्य एव भवति । विशेष्यस्यापि साम्ये त्वर्थप्रकरणादिना वाच्यार्थनियमेऽर्थान्तरावगतिर्ध्वनि[2]विषयः स्यात् । आद्ये तु प्रकारद्वये द्वयोरप्यर्थयोर्वाच्यत्वम् । अत एव द्वयोर्वोपादान इति तृतीयप्रकारविषयत्वेनोक्तम् । विशेष्यस्यापि साम्य इति त्ववशिष्टप्रकारद्वयविषयम् । क्रमेण यथा—

"येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।

---

धृथैव, शूरंमन्यतया सकलाचार्यभूतस्य द्रोणस्यापहासोऽपि जडचेष्टितमभूदिति च व्यज्यते ॥

विशेष्यस्यापीति । विशेष्ययुक्तत्वे सति विशेषणसाम्यं सामान्यलक्षणम् । तत्र विशेष्ययोगः श्लेषनिर्देशेन वा पृथगुपादानेन वेति द्वेधा । आद्यं प्रकारद्वयमिति । प्राकरणिकमात्रविषयमप्राकरणिकमात्रविषयं च । तृतीय उभयविषयः । ध्वनिविषय इति । शब्दशक्तिमूलध्वनिविषयः । तदुक्तम्—

"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम् ॥"

इति । वाच्यत्वमिति । नियामकस्य प्रकरणादेरभावात् । अत एवेति ।

---

१. 'पण' क, ख. पाठः. २ नेरेव वि' ग. पाठ..

8969

यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥"

"नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः ।
सदृशे वनवृद्धानां कमलानां तदीक्षणे ॥"

"स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात् समाक्षिपति जीवितमप्यकाण्डे
कष्टो मनोभव इवेश्वरदुर्विदग्धः ॥"

अत्र[1] हरिहरयोः प्राकरणिकत्वम् । पद्मानां मृगाणां चोपमानत्वादप्राकरणिकत्वम् । ईश्वरमनोभवयोः प्राकरणिकाप्राकरणिकत्वम् । एष च शब्दार्थोभयगतत्वेन वर्तमानत्वात्

विशेष्यस्यापि साम्ये ध्वनित्वापत्तिरेतदा परामृश्यते । अवशिष्टेत्याद्यं प्रकारद्वयमुच्यते । येनेत्यादि । ध्वस्तमनोभवेन बलिजितो विष्णोः कायः पुरा त्रिपुरदाहेऽस्त्रीकृतः । अभवेन येन अनो ध्वस्तं शकटासुरो भग्नः । बलिजित्त्वेन महत्त्वं लक्ष्यते । महान् कायः स्त्रीकृतोऽमृतप्रदानसमये । उद्वृत्तभुजङ्ग एव हारो वलयं[3] च यस्य, उद्वृत्तस्य भुजङ्गस्य हारवो हाशब्दो लयो यस्य च । यश्च गङ्गामधारयत् । यः अगं गोवर्धनं गां भूमिं चाधारयत् । यस्य शिरः शशिमच्चन्द्रवदाहुः हर इति नाम स्तुत्यं चाहुरमराः । शशिमथो राहोः शिरोहर इति स्तुत्यं नामाहुः । अन्धकासुरनाशकरः, अन्धकानां यादवानां वासकरश्च । सर्वदा सदा उमाधवः उमापतिः, सर्वप्रदो[4] माधवश्च । लुब्धा व्याधा आशावन्तश्च । भूरिशिलीमुखा भूरिशरवन्तः भूरयो भृङ्गाश्च । वनम् अरण्यं जलं च । न याति वक्तुं देहीति । शरीरीति दस्वेति च वक्तुमयोग्य इत्यर्थः । मार्गणशतैः (बाणशतैः) प्रार्थनाशतैश्च । अस्य श्लेषस्य शब्दार्थनिष्ठत्वे वैमत्यादुद्भटमतस्य स्वाभिमतत्वं दर्शयितुमाह—एष

१. 'अ हि ह', २ 'महोत्पलहरिणयोरप' क- ख पाठ. ३. 'यश्च य',
४. 'वेदो' ख. पाठः

त्रिविधः। तत्रोदात्तादिस्वरभेदात् प्रयत्नभेदाच्च[1] शब्दान्यत्वे शब्दश्लेषः, यत्र प्रायेण पदभङ्गो[2] भवति। अर्थश्लेषस्तु यत्र स्वरादिभेदो नास्ति। अत एव न तत्र सभङ्गपदत्वम्। सङ्कलनया तूभयश्लेषः[3]। यथा—

"रक्तच्छदत्वं विकचा वहन्तो
नालं जलैः सङ्गतमादधानाः।
निरस्य पुष्पेषु रुचिं समग्रां
पद्मा विरेजुः श्रमणा यथैव॥"

अत्र रक्तच्छदत्वमित्यादावर्थश्लेषः। नालमित्यादौ शब्दश्लेषः। उभयघटनायामुभयश्लेषः। ग्रन्थगौरवभयात्[4] तु पृथङ् नोदाहृतम्। अलङ्कार्यालङ्कारभावस्य[5] च लोकवदेवाश्रयाश्रयि-

चेत्यादि। उदात्तादीत्यादिशब्देनानुदात्तस्वरितौ गृह्येते। प्रयत्नभेदाद् गौरवलाघवरूपात्। यत्र प्रायेणेति। प्रायेणेत्यनेन यत्र समासभेदेनान्यथा वा स्वरभेदो भवति, तत्र 'मुक्ताश्रीरि'त्यादौ 'अपारिजातवार्तापी'त्यादौ चैकपद्येऽपि शब्दश्लेषत्वमिति दर्शयति। तथाहि—मुक्ताश्रीरित्यत्र परित्यक्ता शोभेत्यस्मिन्नर्थे बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम्। मुक्तायाः श्रीरिति षष्ठीतत्पुरुषत्वे समासान्तोदात्तत्वम्। अपारिजातवार्तेत्यत्रापगता अरिजातवार्तेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अविद्यमानपारिजातवार्तेति बहुव्रीहौ 'नञ्सुभ्याम्' (६. २. १७२) इत्यन्तोदात्तत्वमिति स्वरभेदः। स्वरादीत्यादिशब्देन प्रयत्नो गृह्यते। सङ्कलनया शब्दार्थश्लेषयोः संसर्गात्। रक्तच्छदत्वं रक्तपत्रत्वं रक्तवासस्त्वं च। विकचा विकसिताः *विकेशाश्च*। नालं मृणालं न अलं च। श्रमणपक्षे जलैः संगतं सङ्गम् अलं पर्याप्तं नादधाना[6] इत्यन्वयः। पुष्पेषु रुचिम् इतरपुष्पनिष्ठां शोभां कामरुचिं च। रक्तच्छदत्वमित्यादावित्यादिशब्देन विकचा इत्येतद् गृह्यते। रक्तच्छदत्वमि-

१. 'च शब्दाच श', २. 'त्र प्रायेण ख', ३. 'नया तूभ', ४. 'यात् पृ', ५. 'स्य लो' क. ख. पाठः. ६. 'धान', ७. 'था ख', ८. 'र्यसंश्ले' ख. पाठः.

भावेनोपपत्तेः । रक्तच्छदत्वमित्यादावर्थद्वयाश्रितत्वादयमर्थालङ्कारः । नालमित्यादौ तु शब्दद्वयाश्रितत्वाच्छब्दालङ्कारोऽयम् । यद्यपि 'अर्थभेदे शब्दभेद' इति दर्शने रक्तच्छदत्वमित्यादावपि शब्दद्वयाश्रितोऽयं, तथाप्यौपपत्तिकत्वादत्र शब्दभेदस्य प्रतीतावेकतयाध्यवसायान्नास्ति शब्दभेदः । नालमित्यादौ तु प्रयत्नादिभेदात् प्रातीतिक एव शब्दभेदः । अतश्च पूर्वत्रैकवृन्तगतफलद्वयन्यायेनार्थद्वयस्य शब्दे श्लिष्टत्वम् । अपरत्र तु जतुकाष्ठन्यायेन स्वयमेव शब्दयोः श्लिष्टत्वम् ।

---

त्यत्रोभयत्रापि प्रत्ययस्वरेणोदात्तत्वं प्रयत्नभेदाभावश्च । विकचा इत्यत्रापि अव्ययत्वाद् बहुव्रीहित्वाच्च पूर्वपदप्रकृतिस्वरत्वम् । नालमित्या(दावित्या)दिशब्देन पुष्पेषु रुचिमित्येतद् गृह्यते । उभयत्राप्यैकपद्य एकोदात्तत्वम् । भिन्नपदत्वे आद्युदात्तत्वमिति स्वरभेदः । अविरम्य विरम्य पाठात् प्रयत्नलाघवगौरवे च । ग्रन्थगौरवभयादित्यादि । पृथगुदाहरणापेक्षायां रक्तच्छदत्वमित्याद्युभयश्लेषस्योदाहरणम् । शब्दश्लेषस्य यथा—

क्षितिरवाप्य सुवर्णगिरिस्थितं यदुनरेश्वरमाश्रितनन्दनम् ।
अमरपादपदत्तपरिष्क्रियामनुकरोति पुरीममरावतीम् ॥

सुवर्णगिरिस्थितमित्यत्र पदभेदाभेदाभ्यां पूर्ववत् स्वरभेदः प्रयत्नभेदश्च । आश्रितनन्दनमित्यत्र तत्पुरुषे कृदुत्तरपदप्रकृतिस्वरत्वं समासान्तोदात्तत्वं वा, बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अर्थश्लेषस्य यथा —

प्राप्ता रूढिं सुधर्मेति सुमनःस्तोमसेविता ।
परिषद् यदुनाथस्य पत्युश्च त्रिदिवौकसाम् ॥

अत्र सुधर्मेति सुमनःस्तोमसेवितेत्यत्र च पदभेदाभावात् समासभेदाभावाच्च स्वरभेदाद्यभावः रक्तच्छदत्वमित्यादावर्थश्लेषविषयेऽपि शब्दश्लेषत्वमाशङ्क्य परिहरति — यद्यपीत्यादिना । औपपत्तिकत्वादिति । 'अन्यायश्चानेकार्थत्वमि'ति न्यायात् । जतुकाष्ठन्यायेनेति । यथा काष्ठं जतुना

---

१. 'यमुदाहृतः । य', २. 'ताप्य', ३. 'न्यत्र' ३. ख. पाठः ४. 'त्वेऽप्युदा', ५. 'दाभ्यां' ख. पाठः.

पूर्वत्रान्वयव्यतिरेकाभ्यां शब्दहेतुकत्वाच्छब्दालङ्कार इति चेद्, न । आश्रयाश्रयिभावेनालङ्कार्यालङ्कारभावस्य लोकवद् व्यवस्थानात् । एप च नाप्राप्तेष्वलङ्कारान्तरेष्वारभ्यमाणस्तद्बाधकत्वात् तत्प्रतिभोत्पत्तिहेतुरिति केचित् । 'येन ध्वस्तमनोभवेने'त्यादिर्विविक्तोऽस्य विषय इति निरवकाशत्वाभावान्नान्यबाधकत्वमित्यन्यैः सह सङ्करो दुर्बलत्वाद्वा बाध्यत्वमित्यन्ये । तत्र पूर्वेषामभिप्रायोऽयम्—इह प्राकरणिकाप्राकरणिकोभयरूपानेकार्थगोचरत्वेन तावत् प्रतिष्ठितोऽयमलङ्कारः । तत्राद्यं प्रकारद्वयं तुल्ययोगितौया विषयः । तृतीये तु प्रकारे

---

संश्लेषकान्तरनिरपेक्षं श्लिष्यति, एवं नालमित्यादावेकपदात्मके शब्दान्तर उच्चार्यमाणेऽनुच्चारितस्यापि पदद्वयात्मकस्य शब्दान्तरस्य सादृश्यवशेन प्रतीतिः श्लिष्टत्वम् । मतान्तरेऽर्थश्लेषविषये रक्तच्छदत्वमित्यादावपि शब्दश्लेषसमर्थनायालङ्कार्यालङ्कारभावप्रयोजकत्वेनोक्तावन्वयव्यतिरेकौ निराकृत्याश्रयाश्रयिभावस्यैव प्रयोजकत्वमङ्गीकुर्वन्नर्थश्लेषत्वमेव स्थापयति— पूर्वत्रेत्यादिना । लोकवदिति । यथा हस्तालङ्कारः कटकादिः पैदालङ्कारश्च नूपुरादिरुच्यते तदाश्रयत्वाद्, न त्वन्वयव्यतिरेकाभ्याम् । तथा सति केवले कटकादौ हस्तालङ्कारादिव्यपदेशो न स्यात्, स्याच्च हस्तादिस्थे नूपुरादौ । एवं रक्तच्छदत्वमित्यादेर्द्विविधश्लेपोदाहरणत्वमुपपाद्य मतान्तरेण प्रासस्योपमोदाहरणत्वस्य निरसनेन श्लेपोदाहरणत्वमेव स्थापयितुं वैमत्यं तावद् दर्शयति — **एप चे**त्यादि । नाप्राप्तेषु प्राप्तेष्वेवेत्यर्थः । **तद्बाधकत्वा**दिति । 'येन नाप्राप्ते यस्यारम्भः स तस्य बाधको भवती'ति न्यायात् । **दुर्बलत्वा**दिति । अनवकाशत्वाभावादलङ्कारान्तराणामङ्गभूतसाधर्म्यादिप्रतिपादन उपक्षीणत्वाच्च दौर्बल्यम् । श्लेपस्य सावकाशत्वं निराकर्तुमाह — **तत्र पूर्वेपामि**त्यादि । तन्निष्ठत्वेन प्राकरणिकाप्राकरणिकनिष्ठत्वेन.

---

१. 'पः । नि', २. 'त्वाद् चा', ३. 'त्रावि' क. ख. पाठः. ४. 'न' घ. पाठः. ५. 'पा', ६. 'राणा' क. पाठः.

दीपकं[1] प्रभवतीति तावदलङ्कारद्वयं श्लेषविषयं[2] व्याप्यावतिष्ठते। तन्निष्ठत्वेन[3][4] चालङ्कारान्तराणामुत्थानमिति नास्य विविक्तोऽस्ति विषयः। अत एव[5] चालङ्कारान्तराणां बाधितत्वेन प्रतिभामात्रेणावस्थानम्। 'येन ध्वस्तमनोभवे'त्यादौ च प्राकरणिकत्वादर्थद्वयस्य तुल्ययोगितायाः प्रतिभानम्। एवञ्च

"सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव"

इत्यादौ न गुणक्रियासाम्यवच्छब्दसाम्यमुपमाप्रयोजकम् अपितु, उपमाप्रतिभोत्पत्तिहेतुः श्लेष एवावसेयः। श्लेषगर्भे

---

अलङ्कारान्तराणामुपमादीनाम्। एवञ्चेति। श्लेषस्यालङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वे सतीत्यर्थः। सकलकलं कलकलसहितं सम्पूर्णकलं च। अयमर्थः— अर्थालङ्कारभूतायां उपमाया गुणक्रियारूपार्थसाम्य एव सम्भवः, न तु शब्दसाम्य इति तस्या बाध एव युक्त इत्यर्थः। एवमुद्भटमतानुसारेण श्लेषस्य शब्दार्थविषयत्वमलङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वं च दर्शितम्। एवं ह्युद्भटेन श्लेषो लक्षितः—

"एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम्।
स्वरितादिगुणैः श्लिष्टैर्बन्धः श्लिष्टमिहोच्यते॥
अलङ्कारान्तरगतां प्रतिभां जनयन् पदैः।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत् प्रतीयताम्॥"

अस्यार्थः — अर्थभेदेन तावच्छब्दा भिद्यन्ते। भिद्यमानाश्च शब्दाः केचित् स्वरप्रयत्नसाम्यात् तन्त्रेण प्रयोक्तुं शक्याः, केचित् तद्भेदान्न शक्याः। तत्रैकप्रयत्नोच्चार्याणां बन्धः अर्थोक्तिविशिष्टं श्लिष्टं प्रतीयताम्। अर्थश्लेष इत्यर्थः। इतरेषां तच्छायामेकप्रयत्नोच्चार्यसादृश्यं बिभ्रतां भिन्नैः स्वरितादिगुणैरुपलक्षितानां बन्धः शब्दोक्तिविशिष्टं श्लिष्टं प्रतीयताम्। शब्दश्लेष इति यावत्। द्विविधमप्येतदलङ्कारान्तराणां प्रतिभामात्रं जनयति। न तु तेषां तत्र स्वतन्त्रतयावस्थानमित्यर्थः। एवं सर्वत्रालङ्कारान्तरबाधकत्वे

---

१. 'क भ', २. 'ये', ३ 'ष्ठितत्वे', ४. 'नाल', ५. 'वाल', ६. 'त्तात् प्र' क. ख. पाठः. ७. 'या गु' ख. पाठ.

तु रूपके रूपकहेतुकस्य श्लेषस्य तृतीयकक्ष्यायां रूपक एव विश्रान्तिरिति रूपकेण श्लेषो बाध्यते । श्लिष्टविशेषणनिबन्धनायां च समासोक्तौ विशेष्यस्यैव गम्यत्वात् श्लेषबाधिका समासोक्तिः । इह तु—

"त्रयीमयोऽपि प्रथितो जगत्सु
　　यद्वारुणीं प्रत्यगमद् विवस्वान् ।
मन्येऽस्तशैलात् पतितोऽत एव
　　विवेश शुद्ध्यै वडवाग्निमध्यम् ॥"

अत्र श्लोके विवस्वतो वस्तुवृत्तेसम्भव्यधःप्रदेशसंयोगलक्षणं यत् पतितत्वं, यश्च वडवाग्निमध्यप्रवेशः, ते द्वे अपि त्रयीमयसम्बन्धिवारुणीगमनरूपविरुद्धाचरणहेतुकाभ्यां पतितत्वाग्निप्रवेशाभ्यामतिशयोक्त्या श्लेषमूलयाभेदेनाध्यवसीयेते । सोऽयमेकक्रियायोगः । तद्धेतुका च मन्येऽत एवं शुद्ध्यै इत्यु-

प्राप्ते क्वचिदपवादमाह — श्लेषगर्भे त्वित्यादि । यथा 'विद्वन्मानसहंसे' इत्यादौ त्वमेव हंस इति प्रथमं रूपकस्य प्रतीतिः । पश्चात् तदङ्गभूते मानसशब्दे श्लेषस्य । ततो मानसमेव मानसमिति रूपकस्य । एवं रूपकमेव विश्रान्तिधामत्वात् प्रबलम् । श्लिष्टविशेषणेत्यादि । उपोढरागेणेत्यादौ । विशेष्यस्यैवेति । अप्रस्तुतस्येति शेषः । समासोक्तौ विशेष्यस्य गम्यत्व एव तस्मात् तदवगतिनिमित्तत्वादप्राधान्यं विशेषणविषये श्लेष इति समासोक्तेरेव प्राधान्यम् । इह त्वित्यादिना श्लेषस्य कस्यचिदलङ्कारान्तरस्याङ्गभावं कस्यचिद् बाधकत्वं च दर्शयति । तत्र विवस्वतो वस्तुवृत्त्येत्यादिना श्लेषस्यातिशयोक्त्यङ्गत्वं दर्शयति । सोऽयमित्यादि । अतिशयोक्त्याभेदाध्यवसितः पतितत्वाग्निप्रवेशलक्षणः

१. 'स्य ग', २. 'ति श्लो', ३. 'भि', ४. 'रूप', ५. 'भित', ६. 'तो', ७. 'च विवेश शु' क. ग. पाठः. ८. 'मित्याहे' ख पाठः.

त्प्रेक्षा । अत्रात एवेति परामृष्टो विरोधालङ्कारालङ्कृतोऽर्थो हेतुत्वेनोत्प्रेक्ष्यते, शुद्ध्यै इति च फलत्वेन । ततश्च हेतुफलयोर्द्वयोरप्युत्प्रेक्षा । विरोधालङ्कारस्य च विरुद्धाभासत्वं लक्षणम् । अतो विरोधाभासनसमय एव हेतुफलोत्प्रेक्षोत्थानम् । उत्तरकालं तु विरोधसमाधिः । श्लेषस्य च सर्वालङ्कारापवादत्वाद् विरोधप्रतिभोत्पत्तिहेतुरयं श्लेषः । यत्र तु प्रस्तुताभिधेयपरत्वेऽपि वाक्यस्य श्लिष्टपदमहिम्ना वक्ष्यमाणनिष्ठमुपक्षेपापराभिधानं सूचकत्वं, तत्र किं श्लेषः, उत शब्दशक्तिमूलो ध्वनिरिति विचार्यते । तत्र न तावच्छ्लेषः । अर्थद्वयस्यानन्वितत्वेनाभिधेयतया वक्तुमनिष्टेः । नापि ध्वनिः ।

साधारणः क्रियायोगः । तद्धेतुका एवंभूतक्रियानिमित्ता । विरोधालङ्कारेति । त्रयीमयत्वेऽपि वारुणीगमनलक्षणः पूर्वं निर्दिष्टः । हेतुत्वेनेति । पतितत्वाग्निप्रवेशलक्षणायाः क्रियायाः । फलत्वेनेति । तस्या एव । एकैवैषा क्रिया हेतूत्प्रेक्षायाः कार्यत्वेन निमित्तं, हेतुत्वेन च फलोत्प्रेक्षायाः । विरोधालङ्कारस्य चेत्यादिना श्लेषस्य विरोधं प्रति बाधकत्वमाह । नन्वेवं पतितत्वाग्निप्रवेशलक्षणक्रियायोग आभासमूलत्वात् कथमुत्प्रेक्षाया निमित्तं स्यादत आह— **विरोधाभासनसमय एवेति** । **उत्तरकालमिति** । उत्प्रेक्षोदयोत्तरकालम् । **समाधिरिति** । वारुणीमित्यत्र दिगर्थव्यतिरिक्तस्यार्थस्याप्ररोहात् । **सर्वालङ्कारापवादत्वादिति** । अनवकाशत्वेन पूर्वमुपपादितत्वात् । पुनश्च श्लेषस्य सावकाशत्वेन सर्वालङ्कारापवादत्वबाधशङ्कानिवृत्त्यर्थमाह— **यत्रेत्यादि** । श्लिष्टपदमहिम्ना अनेकार्थशब्दमहिम्नेत्यर्थः । **अर्थद्वयस्येत्यादि** । द्वयोरप्यर्थयोरभिधागोचरतया प्रतिपादयितुमनि(मेषः ? ष्टेः) । कुत इत्याह— **अनान्वितत्वेनेति** । पूर्वापरानन्वयात् । एक एव ह्यर्थः पूर्वापराभ्यामन्वयमृच्छति, न द्वितीयोऽपि । श्लेषे तु द्वयोरप्यभिधागोच-

१ 'प्यन्नोत्प्रे', २. 'स्य वि', ३. 'स्य स', ४. 'दकत्वा', ५. 'त्र प्र', ६. 'णापनि' क. ख. पाठः. ७. स्याप्ररो', ८. 'दकत्वा', ९. 'रत्व सप्र' ख. पाठः.

उपक्षेप्यस्यार्थस्य सम्बन्धाभावात् तेन सहोपमानोपमेयभावस्याविवक्षणात्। न चान्या गतिरस्ति। तदत्र किं कर्तव्यम्। उच्यते। श्लेषस्योक्तनयेनात्राप्रवृत्तेर्ध्वनेरेवायं विषय इति निश्चिनुमः। तथाहि—शब्दशक्तिमूलध्वनावर्थान्तरस्यासम्बद्ध[2]त्वात् सम्बन्धार्थमौपम्यं कल्प्यते। स च सम्बन्धः प्रकारान्तरेणौपम्यपरिहारेण यद्युपपादयितुं शक्यः स्यात्, तत् कोऽभिनिवे[3]शस्तत्रोपमाध्वनौ। वस्तुध्वनिरपि सम्बन्धान्तरेण तत्र समीचीनः स्यात्। अत एव—

"अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा॥"

इति न्यायभरनिबन्धेन द्विधा शब्दशक्त्युद्भव उक्तः[4]। एवं प्रकृतेऽपि यत्र सूचनाव्यापारोऽस्ति, तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः। यथा—

"सद्यः कौशिकदिग्विजृम्भणवशादाकाशराष्ट्रं जवात्
त्यक्त्वा धूसरकान्तिवल्कलधरो राजास्तशैलं ययौ।
तत्कान्ताप्यथ सान्त्वयन्त्यलिकुलध्वानैः समुल्लासिभिः
क्रन्दन्तं कुमुदाकरं सुतमिव क्षिप्रं प्रतस्थे निशा॥"

---

रत्वम्। सम्बन्धाभावः कुत इत्याह—तेन सहेति। तेनोपक्षेप्येण। उक्तनयेन अर्थद्वयस्येत्याद्युक्तन्यायेन। प्रकारान्तरेण औपम्यव्यतिरिक्तेन। वस्तुध्वनिरपीति। निरलङ्कारवस्तुमात्रध्वनिरपीत्यर्थः। शब्दशक्तिध्वनावौपम्यकल्पनस्य न नियम इत्यत्र काव्यप्रकाशकारवचनं संवादकत्वेनाह—अलङ्कारोऽथेत्यादि। वस्त्वेवेत्येवकारेण सालङ्कारत्वं व्यवच्छिद्यते। प्रधानत्वेनेति गुणीभूतव्यङ्ग्यनिरासार्थम्। द्विधेति। वस्तुध्वनिरलङ्कारध्वनिश्च।

---

१. 'परत्वस्या', २. 'न्धि', ३. तो च', ४. 'त्युक्तम्। ए', ५. 'या' क. ख. पाठः.

इति हरिश्चन्द्रचरिते । अत्र प्रभातवर्णनानुगुण्येन राजशब्दाभिधेयेऽस्तमुपेयुषि चन्द्रे रोहिताश्वाख्यतनयसहितया औशीनर्या वध्वा युक्तस्य हरिश्चन्द्रस्य राज्ञो विश्वामित्रसम्पादितोपद्रववशात् प्रातः स्वराष्ट्रं त्यक्त्वा वाराणसीं प्रति प्रस्थानं सूचितम् । तथा च कौशिकशब्दः प्रकृते इन्द्रोलूकयोर्वर्तते । सूचनीयार्थविषयत्वेन तु विश्वामित्रवृत्तिः । वल्कलसुताभ्यां त्वौपम्यं सूचनीयार्थनैरपेक्ष्येण सादृश्यसम्भवमात्रेणैव विश्रामणीयम् । अतः प्रकृतेन सूचनीयस्य सम्बन्धाच्छब्दशक्तिमूलो वस्तुध्वनिरयम् । इह च —

"आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे
कण्ठे लग्नः सुकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः ।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे
बाले! लज्जा निरस्ता नहि नहि सरले! चोलकः किं
[त्रपाकृत् ॥"

इत्यलङ्कारान्तराविविक्तोऽयं श्लेषस्य विषय इति नाशङ्कनीयम् ।

---

सद्यः कौशिकेत्यादौ चन्द्रवृत्तान्ते अभिधाया नियन्त्रणस्य हेतुः प्रकरणमित्याह — प्रभातवर्णनेत्यादि । कौशिकशब्द इति । कौशिकादिग्विजृम्भणमित्यनेन वासवदिशः प्राच्या अरुणोदयेनापोढतमस्कत्वाद् विकास उच्यते, उलूकमर्यादाया जृम्भणाभावो वा । वल्कलसुताभ्यामित्यादिना सूच्याभिमतस्याप्यर्थस्य वाच्यत्वेन ध्वनित्वापवादशङ्का न कार्येत्याह । अत्र वल्कलसुतग्रहणं राष्ट्रस्याप्युपलक्षणम् । अत इत्यादि । अत्राप्युदाहरणे ध्वनिरवस्थित इति श्लेषस्य निरवकाशत्वं स्थितमेवेत्यर्थः । अथावकाशान्तरप्रदर्शनेन श्लेषदौर्बल्यवादिनः प्रत्यवस्थानमाशङ्कते — इह चेत्या-

---

१. 'धा र्वा', २. 'ध', ३. 'रवि' क. ख. पाठः. ४. 'बे' ख. पाठः.

अपह्नुतेरत्र विद्यमानत्वात् । वस्तुतोऽपह्नवस्य सादृश्यार्थ-प्रवृत्तेर्नायमपह्नुत्यलङ्कार इति चेत् । न । उभयथाप्यपह्नुतेः सम्भवात् । सादृश्यपर्यवसायिना वाऽपह्नवेन अपह्नवपर्यवसायिना वा सादृश्येन भूतार्थापह्नवस्योभयथापि विद्यमानत्वात् ।

"सादृश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः ।
अपह्नवाय सादृश्यं यत्र सैषाप्यपह्नुतिः ॥"

इति संक्षेपः । आद्या स्वप्रस्ताव एवोदाहृता । द्वितीया तु सम्प्रति प्रदर्शिता । तेनालङ्कारान्तरविविक्तो नास्य विषयोऽस्तीति सर्वालङ्कारापवादोऽयमिति स्थितम् ॥

---

दिना । इदमप्युदाहरणमलङ्कारान्तरस्यैव विषय इत्याह — अपह्नुतेरत्रेत्यादि । वस्तुतोऽपह्नवस्येत्यादि । नह्यत्र प्रियतमचोलकयोः सादृश्यं विवक्षितम् । अनुरागवशादवशतः कीर्तितः प्रियो मुग्धया तत्समधर्मणा चोलकेनापह्नूयते । उभयथापीत्यादिनोक्तमेवार्थं सुखग्रहणाय श्लोकेन निबध्नाति — **सादृश्यव्यक्तये** इति । स्वप्रस्तावे अपह्नुत्यलङ्कारप्रस्तावे । उदाहृतेति । 'यदेतचन्द्रान्त'रित्यादिरूपेण । तेनेत्यादि । न च,

देव! त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥

इत्येष श्लेषस्य विविक्तोऽस्ति विषय इति वाच्यम् । अत्रापि वर्णनीयपाताललक्षणद्रव्यविरोधस्य सद्भावात् । नापि,

ते गच्छन्ति महापदं भुवि परा भूतिः समुत्पद्यते
तेषां तैः समलङ्कृतं निजकुलं तैरेव लब्धा क्षितिः ।
तेषां द्वारि नदन्ति दन्तिनिवहास्ते भूषिता नित्यशो
ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥

इत्यत्र श्लेषस्य विविक्तत्वेनावस्थितिरिति युक्तं वक्तुम् । इहापि रोषतोषलक्षणोपाधिभेदेन द्रष्टुर्वा तादृशद्रष्टृदृष्टत्वे(न) दृश्यानां वा भेदे सति वा-

---

१. 'द्वर्मत्र', २. 'वा सादृश्ये भू', ३. 'भाप्येषा', ४. 'तिः ।' क. ख. पाठः.

प्रस्तुतादप्रस्तुतावगतौ समासोक्तिरुक्ता । अधुना तद्वैपरीत्येनाप्रस्तुतात् प्रस्तुतप्रतीतावप्रस्तुतप्रशंसोच्यते —

**अप्रस्तुतात् सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा ॥ ३४ ॥**

इहाप्रस्तुतस्य वर्णनमेवायुक्तम्, अप्रस्तुतत्वात् । प्रस्तुतपरत्वे तु कदाचित् तद् युक्तं स्यात् । न चाप्रस्तुताद् सम्बन्धे प्रस्तुतप्रतीतिः, अतिप्रसङ्गात् । सम्बन्धे तु भवन्ती त्रिविधं सम्बन्धं नातिवर्तते । तस्यैवार्थान्तरप्रतीतिहेतुत्वोपपत्तेः । त्रिविधश्च सम्बन्धः समान्यविशेषभावः कार्यकारणभावः सारूप्यं चेति । सामान्यविशेषभावे सामान्याद् विशेषस्य विशेषाद् वा सामान्यस्य प्रतीतौ द्वैतम् । कार्यकारणभावेऽप्यनयैव भङ्ग्या द्विधात्वम् । सारूप्ये त्वेको भेद इत्यस्याः पञ्च प्रकाराः । तत्रापि सारूप्यहेतुके भेदे साधर्म्यवैधर्म्याभ्यां द्वैविध्यम् । वाच्यस्य सम्भवासम्भवोभयरूपता-

शब्दस्य समुच्चयार्थत्वेन प्राकरणिकविषयायास्तुल्ययोगितया विकल्पार्थत्वेन 'भक्तिप्रह्वे'त्यादिवद् विकल्पस्य वा सुवचत्वात् ॥

प्रस्तुतादप्रस्तुतावगतावित्यादिनाप्रस्तुतप्रशंसायाः सङ्गतिं दर्शयति । मध्ये परिकरश्लेषयोर्लक्षणं समासोक्तिनिमित्तभूतविशेषणसाम्यान्वयेन प्रासङ्गिकम् । अप्रस्तुतेत्यादि । अप्रस्तुतात् प्रस्तुतप्रतीतावप्रस्तुतप्रशंसेति सामान्यलक्षणम् । अनयैव भङ्ग्येति । कारणात् कार्यस्य कार्याद् वा कारणस्य प्रतीतौ । सारूप्ये त्वेक इत्यादि । सारूप्यसम्बन्धस्य सामान्यविशेषकार्यकारणभाववत् सम्बन्धिस्वरूपभेदोल्लेखेनाप्रवृत्तेरेकभेदत्वमुक्तम् । प्रकारान्तरेण तु भेदमाह — तत्रापीत्यादि । वाच्यस्येत्यादि । प्रस्तुतारोपमन्तरेण घटमानत्वमघटमानत्वं च सम्भवासम्भवौ । इदमपि प्रकार-

१. 'त्ती न त्रि', २. 'श्वमति', ३. 'णौ भे', ४. 'तात्रिभि' क. ग. पाठः.

भिश्च त्रयः प्रकाराः। श्लिष्टशब्दप्रयोगे त्वर्थान्तरस्यावाच्यत्वात् श्लेषाद् विशेषः । श्लेषे ह्यनेकस्यार्थस्य वाच्यत्वमित्युक्तम् । तत्र सामान्याद् विशेषप्रतीतौ यथा —

"तण्णत्थि किंपि पइणो पकप्पिअं जं ण णिअइघरणीए ।
अणवरअगमणसीळस्स काळपहिअस्स पाहिज्जम् ॥"

अत्र प्रहस्तवधे विशेषे प्रस्तुते सामान्यमभिहितम् । विशेषात् सामान्यप्रतीतौ यथा —

"एतत् तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-
स्तत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा ॥"

अत्र जडानामस्थान एवाभिनिवेश इति सामान्ये प्रस्तुते विशेषोऽभिहितः । कारणात् कार्यप्रतिपत्तौ यथा —

"पश्यामः किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।

---

त्रयं सारूप्य एव । श्लेषेण सर्वालङ्कारापवादकत्वादस्याश्च बाध्यत्वं नाशङ्कनीयमित्याह — **श्लिष्टशब्दप्रयोग** इति। उक्तमिति । समासोक्त्युपक्रमे । **तण्णत्थी**त्यादि ।

तन्नास्ति किमपि पत्युः (सुं ? प्र)कल्पित यन्न नियतिगृहिण्या ।
अनवरतगमनशीलस्य कालपथिकस्य पाथेयम् ॥

पत्युः कालपथिकस्येत्यन्वयः । **अत्र प्रहस्ते**त्यादि । प्रहस्तस्य[1] कालवशंवदत्वे वक्तव्ये सर्वेषा कालवशंवदत्वमुक्तम् । **एतत् तस्ये**त्यादि । मुखादारम्भतः । तस्येति वक्ष्यमाणो जड. परामृश्यते । स जड इत्यस्य निद्रातीत्यनेनान्वयः । मध्ये वाक्य शृण्वन्यदस्मादपीति । अस्मात् कमलिनी-

---

१ 'कार्थ', २ 'तीतौ य' क ख पाठ. ३. 'स' ख. पाठ.

इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥"

अत्र तथाधिरूढो[२] मानः कथं निवृत्त[३] इति कार्ये प्रस्तुते निवृत्तिकारणमभिहितम् । कार्यात् कारणप्रतीतौ यथा —

"इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा ।
कार्कश्यं कलयापि कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥"

अत्र सम्भाव्यमानैरिन्द्वादिगतैरञ्जनलिप्तत्वादिभिः कार्यरूपैरप्रस्तुतैर्लोकोत्तरवदनादिगतः सौन्दर्यविशेषः कारणरूपः प्रस्तुतः प्रतीयते । तेनेयमप्रस्तुतप्रशंसा । ननु कार्यात् कारणे गम्यमानेऽप्रस्तुतप्रशंसायामिष्यमाणायां—

"येन लम्बालकः सास्रः कराघातारुणस्तनः ।
अकारि भग्नवलयो गजासुरवधूजनः ॥"

"चक्राभिघातप्रसभाज्ञयैव
चकार यो राहुवधूजनस्य ।

पत्रवारिकणविषयमुक्ताभ्रमादप्यन्यज्जात्यं भृण्वित्यर्थः । **पश्याम इति ।** अयं खलु शठः किं मां नालपतीत्यन्वयः । **सम्भाव्यमानैरित्यादि ।** मुखाद्यपेक्षया कान्त्यादिवैधुर्यलक्षणनिमित्तवशादुत्प्रेक्ष्यमाणैः । तेनेयमित्युपसंहारेण कार्यात् कारणप्रतीतिरूपाया अप्रस्तुतप्रशंसायाः पर्यायोक्तविविक्तविषयत्वं सूचयति । अस्यैवोदाहरणस्याप्रस्तुतप्रशंसाविषयत्वं समर्थयितुं पर्यायोक्ताप्रस्तुतप्रशंसयोर्विषयविभागं चोद्यपूर्वकं दर्शयति — **नन्वित्या-**

१. 'यथाध्यासाधि', २. 'दोऽपि मा', ३. 'वर्तिन इ' ४. 'लता इवा', ५. 'रो' क. ख. पाठः.

आलिङ्गनोद्दामविलासवन्ध्यं
रतोत्सवं चुम्बनमात्रशेषम् ॥"

इत्यादौ सुप्रसिद्धे पर्यायोक्तविषयेऽप्यप्रस्तुतप्रशंसाप्रसङ्गः। अत्र हि गजासुरवधूगतेन लम्बालकत्वादिना कार्येण कारणभूतो गजासुरवधः प्रतीयते। तथा राहुवधूगतेन विशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणरूपोऽवगम्यते। एवमन्यत्रापि पर्यायोक्तविषये ज्ञेयम्। तस्मादप्रस्तुतप्रशंसाविषयत्वात् पर्यायोक्तस्य निर्विषयत्वप्रसङ्ग इति। नैष दोषः। उभयत्र कार्यात् कारणं प्रतीयते[३]। कार्यमप्रस्तुतं प्रस्तुतं चेति द्वयी गतिः। यत्र प्रस्तुतत्वं कार्यस्य कारणवत् तस्यापि वर्णनीयत्वात्, तत्र कार्यमुखेन कारणं पर्यायेणोक्तमिति पर्यायोक्तालङ्कारः। तत्र हि कारणापेक्षया कार्यस्यातिशयेन सौन्दर्यमिति तदेव[४] वर्णितम्। यथोक्तोदाहरणद्वये[५]। अत्र हि गजासुरवधवद् गजासुरवधूवृत्तान्तोऽपि भगवत्प्रभावजन्यत्वात् प्रस्तुत एव। एवं राहुवधूवृत्तान्तोऽपि ज्ञेयः। ततश्च नायमप्रस्तुतप्रशंसाया विषयः। यत्र पुनः कारणस्य प्रस्तुतत्वे कार्यमप्रस्तुतं वर्ण्यते, तत्र स्पष्टैवाप्रस्तुतप्रशंसा। यथा 'इन्दुर्लिप्त इवे'त्यादौ। अत्र हीन्द्वादयः स्फुटमेवाप्राकरणिकाः। तत्प्रतिच्छन्दभूतानां मुखादीनां प्राकरणिकत्वात्। तेनात्रेन्द्वादिगतेनाञ्जनलिप्तत्वादिनाप्रस्तुतेन प्रस्तुतं मुखादि-

दिना। सुप्रसिद्ध इति। उद्भटादिभिरुदाहृतत्वात्। एवमन्यत्रापीति। 'स्पृष्टास्ता' इत्यादौ। अप्रस्तुतप्रशंसाविषयत्वादिति। उदाहर-

१. 'द', २. 'यत्र', ३ 'ते। तत्र का', ४ 'वैनायम्।', ५. 'येन। ध', ६ 'तद्वधू', ७ 'भाति' क. ख पाठ ८. 'द' ख. पाठ.

गतं सौन्दर्यं सहृदयहृदयाह्लादि गम्यत इत्यप्रस्तुतप्रशंसैवासौ। एवञ्च यत्र वाच्योऽर्थोऽर्थान्तरं तादृशमेव स्वोपस्कारकत्वेनागूरयति, तत्र पर्यायोक्तम्। यत्र पुनः स्वात्मानमेवाप्रस्तुतत्वात् प्रस्तुतमर्थान्तरं प्रति समर्पयति, तत्राप्रस्तुतप्रशंसेति निर्णयः। ततश्चानया प्रक्रियया,

"राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः<br>
कुब्जे! भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।<br>
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-<br>
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते॥"

इत्यत्र पर्यायोक्तमेवेति बोद्धव्यम्। अन्ये तु दण्डयात्रोद्यतं त्वां बुद्ध्वा त्वदरयः पलाय्य गता इति कारणरूपस्यैवार्थस्य प्रस्तुतत्वात् कार्यरूपोऽर्थोऽप्रस्तुत एव। राजशुकवृत्तान्तश्चाप्रस्तुतत्वात् प्रस्तुतार्थं स्वात्मानमर्पयतीत्यप्रस्तुतप्रशंसैवात्र न्याय्येति वर्णयन्ति। सर्वथा पर्यायोक्ताप्रस्तुतप्रशंसयोर्विषयविभागः सुनिरूपित एवेति स्थितम्। सारूप्ये यथा।

---

णानामिति शेषः। तत्प्रतिच्छन्दभूतानाम् इन्द्राद्युपमेयभूतानाम्। तादृशमेवेति। वाच्यवद् वर्णनीयमेव। (उ? स्वो)पस्कारकत्वेन स्वसाधकत्वेन। आगूरयति आक्षिपति। यत्र पुनरिति। वाच्योऽर्थ इत्यनुवर्तते। एतदेव ग्रन्थारम्भे 'स्वसिद्धय' इत्यादिना सूचितम्। ततश्चेति। एवं विविक्तविषयत्वात्। अन्ये त्विति। काव्यप्रकाशकारादयः। तन्मतं दूषयति — सर्वथेति। सुनिरूपित इति। कार्यस्य वर्णनार्हानर्हत्वाभ्याम्। अत्र च शत्रुपलायनवत् तद्भवनगतशुकवृत्तान्तोऽपि वर्णनीयशौर्यातिशयजन्यत्वात् प्रस्तुत एवेति पर्यायोक्तत्वमेव युक्तमिति भावः। सारूप्ये यथेत्यस्यानन्तरम्

---

1. 'भद्रो' न ख पाठः. २ 'र्थाव्या' ग पाठः.

एतानि साधर्म्योदाहरणानि। वैधर्म्येण यथा—

"धन्याः खलु वने वाताः कल्हारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥"

अत्र वाता धन्या इत्यप्रस्तुतादर्थादहमधन्येति वैधर्म्येण प्रस्तु-

---

एतानि साधर्म्योदाहरणानीत्यस्मात् पूर्वं ग्रन्थकारदर्शितान्युदाहरणानि भ्रष्टत्वान्न दृश्यन्ते। अतो ग्रन्थान्तरदर्शितनयेन तानि दर्शयामः। सा च सारूप्यनिमित्ता त्रिधा श्लेषवती समासोक्तिमती तुल्यसंविधानवती चेति। तत्र श्लेषवती यथा—

सत्यानुरक्तो नरकस्य जेता यदूद्वहो विक्रमनिर्जितेन्द्रः।
आविष्कृतस्वर्गतरुर्धरित्र्यामंशो हरेर्वाग्विषयः कथं स्यात्॥

नात्र समासोक्तिः। विशेष्यस्यापि यदूद्वह इति साम्येन निर्दिष्टत्वात्। नापि श्लेषालङ्कारः, अर्थद्वयस्याप्यवाच्यत्वात्। नापि शब्दशक्तिमूलो ध्वनिः, वाच्यस्याप्रस्तुतत्वात्। नचात्र वर्णनीयत्वेन प्रस्तुत एव राजा वाच्योऽस्त्विति युक्तं वक्तुं, स्वर्गतर्वाविष्करणादीनां मुख्यया वृत्त्यासम्भवात्। आक्षिप्यमाणस्य तु गुणवृत्त्या तद्वर्णनमविरुद्धम्। समासोक्तिमती यथा—

सेवितं द्विजगणेन विस्तृतच्छायमाश्रितफलप्रदायिनम्।
पादपं कमपि कूपकक्षितौ रूढमाश्रितवतां कुतः श्रमः॥

अत्र द्विजगणसेवितत्वादिविशेषणसाम्यात् पादपमित्यस्य विशेष्यस्य साम्याभावाच्च समासोक्तिव्यपदेशमात्रं, नतु मुख्या समासोक्तिः, वाच्यस्याप्रस्तुतत्वात्। तुल्यसंविधानवती यथा—

दक्षिणसमुद्रपारे केचिन्मृदिताः स्थितेन केसरिणा।
अपरे दूरं गमिता (इभा)स्तथान्ये वनान्तरं गमिताः॥

अत्र शब्दानामप्रस्तुतैकार्थनिष्ठत्वेऽपि संविधानतुल्यत्वबलेन वर्णनीयेन राज्ञा केषाञ्चिदरीणां वधः अन्येषां दूरमपसारणम् अपरेषां च स्वराज्याद् भ्रंशयित्वा द्वीपान्तरप्रापणं च कृतमिति प्रतीयते। वैधर्म्येणेति। रामस्पर्श-

---

१. 'मिति' क. पाठः.

तोऽर्थः प्रतीयते। वाच्यसम्भव उक्तान्येवोदाहरणानि। असम्भवे यथा—

"कस्त्वं भोः! कथयामि दैवहतकं मां विद्धि शाकोटकं
 [२]निर्वेदादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
 नच्छायापि परोपकारकरणी मार्गस्थितस्यापि मे॥"

अत्राचेतनेन सह प्रश्नोत्तरिकानुपपन्नेति वाच्यस्यासम्भव एव। प्रस्तुतं प्रति तात्पर्यात् प्रमुख एव तदध्यारोपैप्रतीतेर्युज्यत एवैतत्। उभयरूपत्वे यथा—

"अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः।
 कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः॥"

अत्र वाच्येऽर्थे कण्टकानां गुणभङ्गुरीकरणे हेतुत्वमसम्भवि, छिद्राणां तु सम्भवि इत्युभयरूपत्वम्। प्रस्तुततात्पर्येण प्रतीतेस्तदध्यारोपात् सङ्गतमेवैतदिति नासमीचीनं किञ्चित्। एतदेव च श्लेषगर्भायामस्यामुदाहरणम्। तदत्र सामान्यविशेषत्वेन कार्यकारणत्वेन सारूप्येण च यद् भेदपञ्चकमुद्दिष्टं, तत्र द्वयोः सामान्यविशेषयोः कार्यकारणयोश्च यदा वाच्यत्वं

---

तदभावप्रयुक्तयोर्धन्यत्वाधन्यत्वयोर्मिथो विरुद्धत्वात्। उक्तानीति प्रष्टत्वाददृष्टानि श्लेषादिमन्ति निर्दिश्यन्ते। असम्भविनोऽपि वाच्यस्य कथमभिधानमित्यत आह—प्रस्तुतं प्रतीति। सम्भवत्प्रश्नोत्तरिकप्रस्तुताध्यारोपेण। श्लेषगर्भायामिति। छिद्रकण्टकगुणशब्दानामुभयार्थत्वेन श्लिष्टत्वम्। अनन्तरमर्थान्तरन्यासस्य लक्षणार्थमप्रस्तुतप्रशंसया सह तस्य प्रसङ्गाद् दृष्टान्तस्य चांशेन साम्यमंशेन वैधर्म्यं च दर्शयति—तदत्रेत्यादिना।

---

१. 'स्थम्भ स' क. पाठ. २ 'वैराग्यादि', ३. 'पेन म' ग. पाठः।

भवति, तदार्थान्तरन्यासाविर्भावः। सरूपयोस्तु वाच्यत्वे दृष्टान्तः। अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गम्यत्वे सर्वत्राप्रस्तुतप्रशंसेति निर्णयः॥

उक्तन्यायेन प्राप्तावसरमर्थान्तरन्यासमाह—

**सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः॥ ३५॥**

निर्दिष्टस्याभिहितस्य समर्थनार्हस्य प्रकृतस्य[1] समर्थकात् पूर्वं पश्चाद् वा निर्दिष्टस्य यत् समर्थनमुपपादनं, न त्वपूर्वत्वेन प्रतीतिः। अतो नानुमानरूपो[2]ऽसावर्थान्तरन्यासः। तत्र सामान्यं विशेषस्य, विशेषो वा सामान्यस्य समर्थक इति द्वौ भेदौ। तथा कार्यं कारणस्य, कारणं वा कार्यस्य समर्थकमिति[3] द्वौ भेदौ। तत्र भेदचतुष्टये प्रत्येकं साधर्म्यवैधर्म्याभ्यां भेदद्वयेऽष्टौ भेदाः। हिशब्दाभिधानानभिधानाभ्यां

तत्र सामान्यविशेषभावादिसम्बन्धनिबन्धनत्वेन साम्यम्, अन्यतरोभयवाच्यत्वाभ्यां वैषम्यम्॥

यदर्थमयं विषयविभागः कृतः, तदाह—**उक्तन्यायेने**त्यादि। **सामान्येति**। निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यास इति सामान्यलक्षणम्। सामान्यविशेषेति भेदनिर्देशः। तत्र निर्दिष्टग्रहणेनाप्रस्तुतप्रशंसाव्यावृत्तिः। तस्यां हि 'तणणत्थी'त्यादौ सर्वस्य कालवशंवदत्वेन प्रहस्तकालवशंवदत्वं समर्थ्यते। तथाच भट्टेन्दुराजेन 'प्रीणितप्रणयी'त्यादावप्रस्तुतप्रशंसोदाहरणे समर्थ्यसमर्थकभावस्य विद्यमानत्वात् तद्व्यावृत्त्यर्थं भट्टोद्भटग्रन्थे प्रकृतार्थसमर्थनमित्यत्र प्रकृतशब्दः स्वशब्दोपात्तप्रकृतार्थनिष्ठो द्रष्टव्य इति व्याख्यातम्। दृष्टान्तव्यवच्छेदाय सूत्रे स्वकण्ठेनानुपात्तमपि समर्थनपदसामर्थ्यलब्धं[4] विशेषणं दर्शयति—**समर्थनार्हस्येति**। दृष्टान्ते हि बिम्बप्रतिबिम्बत्व-

१. 'स्यासमर्थनात् पू', २. 'पोऽयं', ३. 'स्यपि द्वौ' क. ख. पाठः. ४. 'ब्ध' ख. पाठः.

समर्थकपूर्वोपन्यासोत्तरोपन्यासाभ्यां च भेदान्तरसम्भवेऽपि न तद्गणना, सहृदयहृदयहारिणो वैचित्र्यस्याभावात्। तस्माद् भेदाष्टकमेवेहोट्टङ्कितम्। क्रमेण यथा—

"अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः॥"

"लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं नहि निमित्तमुदात्ततायाः।
वातापितापनमुनेः कलशात् प्रसूति-
र्लीलायितं पुनरमुष्य समुद्रपानम्॥"

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥"

अत्र सहसाविधानाभावस्य विमृश्यकारित्वरूपस्य सम्पद्वरणं कार्यं साधर्म्येण समर्थकम्। तस्यैवैतत्कार्यविरुद्धमापत्पदत्वं

मेव विवक्ष्यते, न तु समर्थ्यसमर्थकभावः। हिशब्दाभिधानेत्यादिनोद्भटोक्तं भेदप्रकारं दूषयति। उट्टङ्कितं निर्णीतम्। अनन्तेत्यादि। अत्र हिमलक्षणदोषविशेषस्य रत्नरूपगुणविशेषसमुदायशालिनि सौभाग्यविलोपिभावलक्षणार्थकार्यकरत्वरूपो(?) विशेषो दोषमात्रस्य गुणसन्निपातसद्भावे सति निमज्जनलक्षणेनाकिञ्चित्करत्वेन सामान्यरूपेण समर्थ्यते। सहसा विदधीतेत्यत्रैकमेव कारणं प्रति किञ्चित् कार्यं साधर्म्येण समर्थकं किञ्चिद् वैधर्म्येणेत्याह—**अत्र सहसाविधानेत्यादिना**। विमृश्यकारिणमित्यनेन पूर्वार्धनिर्दिष्टसहसाविधानाभावलक्षणं कारणमेवानूद्यत इत्याह—**विमृश्यकारित्वरूपस्येति**। **साधर्म्येणेति**। तत्कार्यत्वात्। **एतत्कार्यविरुद्ध-**

१. 'स्यासंभपा' क. घ. पाठ. २. 'वि या भाविप्रगुणभा' ख. पाठः.

सहसाविधानाभावविरुद्धाविवेककार्यं वैधर्म्येण समर्थकम्।

"पृथ्वि! स्थिरीभव भुजङ्गम! धारयैनां
　त्वं कूर्मराज! तदिदं द्वितयं दधीथाः।
दिक्कुञ्जराः! कुरुत तत्त्रितये दिधीर्षां
　देवः करोति हरकार्मुकमाततज्यम्॥"

अत्र हरकार्मुकाततज्यीकरणं पृथ्वीस्थैर्यादिप्रवर्तकत्वे कारणं समर्थकत्वेनोक्तम्। वैधर्म्येण सामान्यविशेषभावे यथा —

"अहो हि मे बह्वपराद्धमायुषा
　यदप्रियं वाच्यमिदं मयेदृशम्।
त एव धन्याः सुहृदां पराभवं
　जगत्यदृष्ट्वैव हि ये क्षयं गताः॥"

अत्रायुःकर्तृकापराधाक्षिप्तस्याधन्यत्वस्यायुर्विरुद्धक्षयगतिप्रयुक्तं धन्यत्वं विरुद्धं सामान्यरूपतया समर्थकत्वेनोक्तम्। कार्यकारणतायां तु वैधर्म्येणोदाहृतम्। हिशब्दाभिहितत्वादिभेदाः स्वयमेव बोद्धव्याः। चारुत्वातिशयाभावान्नेह प्रपञ्चिताः॥

---

मिति। संपद्धरणविरुद्धम्। वैधर्म्येणेति। विरुद्धकारणजन्यत्वात्। प्रवर्तकत्व इति। पृथ्वि! स्थिरीभवेत्यादिवचनस्य प्रवर्तनारूपत्वात्। आयुःकर्तृकेति। अजीवद्भिरप्रियं वक्तुमशक्यमित्यायुष एवाप्रियवचने प्रयोजकत्वमिति तस्यापराधकर्तृत्वम्। अत्र समर्थनीयो विशेषो न निर्दिष्ट इति शङ्का न कार्येत्याह—आक्षिप्तस्येति। आयुषोऽपराधश्चाधन्यत्वापादनमेवेत्यर्थः। विरुद्धमिति। धन्यत्वाधन्यत्वयोर्विरुद्धस्वरूपत्वाद् विरुद्धप्रयोजकत्वाच्च। उदाहृतमिति। 'अविवेकः परमापदां पदमि'ति। एवं सामान्यस्य कार्यस्य च वैधर्म्येण समर्थकत्वमुदाहृतम्। विशेषस्य कारणस्य च क्रमेण

---

१. 'मिम द्वि', ५ 'यो वै', ३. 'वात्तु नेह' क. ख. पाठ. ४. 'दर्शिना' मूलपाठः ५ 'पनि', ६. 'ना' ख पाठ·

कृत्वा। स्तुतिनिन्दारूपस्य विच्छित्तिविशेषस्य भावादप्रस्तुतप्रशंसातो भेदः। क्रमेण यथा—

"हे हेलाजितबोधिसत्त्व! वचसां किं विस्तरैस्तोयधे!
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः॥"

अत्र विपरीतलक्षणया वाच्यवैपरीत्यप्रतीतिः।

"इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि-
र्दिङ्नागानां मदजलमपीभाञ्जि गण्डस्थलानि।
अद्याप्युर्वीवलयतिलक! श्यामलिम्नानुलिप्ता-
न्युद्भासन्ते वद धवलितं किं यशोभिस्त्वदीयैः॥"

अत्र धवलताहेतुयशोविषयानवक्लृप्तिप्रतिपादनेन 'विशेषप्रतिषेधे शेषाभ्यनुज्ञानम्' इति न्यायात् कतिपयपदार्थवर्जं समस्तवस्तुधवलताकारित्वं नृपयशसः प्रतीयते।

---

स्तुतिनिन्दारूपस्येति। विपरीतलक्षणयेति। हे हेलाजितेत्यादिभिः परमकारुणिकत्वप्रतिपादकैः पदैर्वाच्यविपरीतनृशंसत्वादि लक्ष्यते। अत्र धवलतेत्यादि। धवलताहेतुना यशसा विषयाणां धवलीकर्तव्यानामनवक्लृप्तिरव्याप्तिः, तत्प्रतिपादनमुखेन। अव्याप्तिश्चेन्दुलक्ष्मादीनां श्यामलिम्नानुलिप्तत्वेनावगताद[3]धवलीकरणात् प्रतीयते। विशेषप्रतिषेध इत्यादिना निन्दायाः स्तुतिपर्यवसायित्वं दर्शयति। कतिपयपदार्थवर्जमिति। एतच्छ्लोकनिर्दिष्टेन्दुलक्ष्मादिवर्जम्। पूर्वत्रोदाहरणे[4] वैरस्याद[5]नुपभोग्यत्वेन परानुपकारित्वस्य प्रत्यक्षतः सिद्धेः परहिताधाने गृहीतव्रत इत्यादिस्तुतेर्बाधः। उत्तरत्र सर्वपदार्थधवलीकारगोचरेण प्रत्यक्षेण धवलितं किमित्यादिना

---

१. 'भजनवा'युदय', २. 'शोन' क ग. पाठ' ३. 'तताद', ४ 'ण' ख. ग. पाठ. ५. 'स्यानु' क. पाठ.

"किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥"

इत्यत्र प्रक्रान्तापि स्तुतिपर्यवसायिनी निन्दा हन्त कीर्तिरि-त्यनेन[2] भणितिप्रकारेणोन्मूलितेव न प्ररोहं गमितेति क्लिष्टमे-तदुदाहरणम् ॥

गम्यत्वमेव प्रकृतं विशेषविषयत्वेनोररीकृत्याक्षेपाल-ङ्कार उच्यते—

**उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेपः ॥ ३८ ॥**

इह प्राकरणिकोऽर्थः प्राकरणिकत्वादेव वक्तुमिष्यते ।

---

बो[3]धिता निन्दा बाध्यते । उन्मूलितेवेत्यादि । हन्तशब्दस्य विषादद्योत-कत्वान्निन्दापर्यवसायित्वस्यैव प्ररोहः, न स्तुति[4]पर्यवसायित्वस्य । अथवा हन्तशब्दस्य हर्षप्रतिपादकतयोपक्रम एव निन्दाया उन्मूलितत्वेन प्रतीतेर्न तन्मुखेन स्तुतेरभिव्यक्ति । अतः क्लिष्टतेत्यर्थः । एतत्प्रतिपादनार्थमेवोदाहर-णान्तरोपन्यासः ॥

**विशेषविषयत्वेनोररीकृत्येति** । विशेषस्य गम्यत्वमङ्गीकृत्य । **उक्तवक्ष्यमाणयोरित्यादि** । विशेषप्रतिपत्त्यर्थं प्राकरणिकनिषेधाभास आक्षेप इति सामान्यलक्षणम् । उक्तवक्ष्यमाणयोरिति प्रकारनिर्देशः । नि-षेध्यनिष्ठविशेषप्रतीतिप्रयोजनो बाध्यत्वेना[5]भासरूप उक्तवक्ष्यमाणयोर्निषेधा-भास आक्षेप इति सूत्रार्थः । सूत्रे प्राकरणिकयोरिति विशेषणं निषेधस्या-भासताप्रतिपादनहेतुत्वेनोक्तमित्याह — **इह प्राकरणिकोऽर्थ** इत्या-

---

१. 'ति भ' ख. ग. पाठः. २. 'ऽन्मू' क. पाठः. ३. 'बा', ४. 'निन्दाप', ५. 'नावभा' ख पाठः

कृत्वा । स्तुतिनिन्दारूपस्य विच्छित्तिविशेषस्य भावादप्रस्तुतप्रशंसातो भेदः । क्रमेण यथा—

"हे हेलाजितबोधिसत्त्व! वचसां किं विस्तरैस्तोयधे!
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥"

अत्र विपरीतलक्षणया वाच्यवैपरीत्यप्रतीतिः ।

"इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि-
र्दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक! श्यामलिम्नानुलिप्ता-
न्युद्भासन्ते वद[2] धवलितं किं यशोभिस्त्वदीयैः ॥"

अत्र धवलताहेतुयशोविषयानवक्लृप्तिप्रतिपादनेन 'विशेषप्रतिषेधे शेषाभ्यनुज्ञानम्' इति न्यायात् कतिपयपदार्थवर्जं समस्तवस्तुधवलताकारित्वं नृपयशसः प्रतीयते ।

---

स्तुतिनिन्दारूपस्येति । विपरीतलक्षणयेति । हे हेलाजितेत्यादिभिः परमकारुणिकत्वप्रतिपादकैः पदैर्वाच्यविपरीतनृशंसत्वादि लक्ष्यते । अत्र धवलतेत्यादि । धवलताहेतुना यशसा विषयाणां धवलीकर्तव्यानामनवक्लृप्तिरव्याप्तिः, तत्प्रतिपादनमुखेन । अव्याप्तेश्चेन्दुलक्ष्मादीनां श्यामलिम्नानुलिप्तत्वेनावगता[3]द्धवलीकरणात् प्रतीयते । विशेषप्रतिषेध इत्यादिना निन्दायाः स्तुतिपर्यवसायित्वं दर्शयति । कतिपय[4]पदार्थवर्जमिति । एतच्छ्लोकनिर्दिष्टेन्दुलक्ष्मादिवर्जम् । पूर्वत्रोदाहरणे[5] वैरस्यादनुपभोग्यत्वेन परानुपकारित्वस्य प्रत्यक्षतः सिद्धेः परहिताधाने गृहीतव्रत इत्यादिस्तुतेर्बाधः । उत्तरत्र सर्वपदार्थधवलीकारगोचरेण प्रत्यक्षेण धवलितं किमित्यादिना

---

१. 'भजभयाभ्युदय', २. 'शोन' क. ग. पाठः ३. 'तन्नाद', ४. 'ण' ख. ग. पाठः. ५. 'स्यानु' क. पाठः.

"किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
　　स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
　　मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्त्तिः ॥"

इत्यत्र प्रक्रान्तापि स्तुतिपर्यवसायिनी निन्दा हन्त कीर्त्तिरित्यनेन[२] भणितिप्रकारेणोन्मूलितेव न प्ररोहं गमितेति क्लिष्टमेतदुदाहरणम् ॥

गम्यत्वमेव प्रकृतं विशेषविषयत्वेनोररीकृत्याक्षेपालङ्कार उच्यते—

**उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेपः ॥ ३८ ॥**

इह प्राकरणिकोऽर्थः प्राकरणिकत्वादेव वक्तुमिष्यते ।

[३]बोधिता निन्दा बाध्यते । उन्मूलितेवेत्यादि । हन्तशब्दस्य विषादद्योतकत्वान्निन्दापर्यवसायित्वस्यैव प्ररोहः, न स्तुतिपर्यवसायित्वस्य । अथवा हन्तशब्दस्य हर्षप्रतिपादकतयोपक्रम एव निन्दाया उन्मूलितत्वेन प्रतीतेर्न तन्मुखेन स्तुतेरभिव्यक्तिः । अतः क्लिष्टतेत्यर्थः । एतत्प्रतिपादनार्थमेवोदाहरणान्तरोपन्यासः ॥

विशेषविषयत्वेनोररीकृत्येति । विशेषस्य गम्यत्वमङ्गीकृत्य । उक्तवक्ष्यमाणयोरित्यादि । विशेषप्रतिपत्त्यर्थं प्राकरणिकनिषेधाभास आक्षेप इति सामान्यलक्षणम् । उक्तवक्ष्यमाणयोरिति प्रकारनिर्देशः । निषेध्यनिष्ठविशेषप्रतीतिप्रयोजनो वाच्यत्वेनाभासरूप उक्तवक्ष्यमाणयोर्निषेधाभास आक्षेप इति सूत्रार्थः । सूत्रे प्राकरणिकयोरिति विशेषणं निषेधस्याभासताप्रतिपादनहेतुत्वेनोक्तमित्याह — इह प्राकरणिकोऽर्थ इत्या-

१. 'ति भ' ख. ग. पाठः. २. 'ोन्मू' क. पाठः. ३. 'त्र', ४. 'निनिन्दाप', ५. 'नाबभा' ख. पाठः

तथाविधस्य विधानार्हस्य निषेधः कर्तुं न युज्यते । स कृतोऽपि बाधितस्वरूपत्वान्निषेधायत इति निषेधाभासः सम्पन्नः । तस्यैतस्य करणं प्रकृतगतत्वेन विशेषप्रतिपत्त्यर्थम् । अन्यथा गजस्नानतुल्यं स्यात् । स चाभासमानो निषेध उक्तस्य वा स्यादासूत्रिताभिधेयत्वेन वक्ष्यमाणस्य वा स्यादित्याक्षेपस्य द्वयी गतिः । उक्तविषयत्वेन कैमर्थक्यपरमालोचनमाक्षेपः । वक्ष्यमाणविषयत्वेनानयनरूपमागूरणमाक्षेपः । एवञ्च अर्थभेदादाक्षेपशब्दस्य द्वावाक्षेपाविति वदन्ति । तत्रोक्तविषये यस्यैवेष्टस्य विशेषस्तस्यैवाक्षेपः । वक्ष्यमाणविषये त्विष्टस्य विशेषः इष्टसम्बन्धिनोऽन्यस्य सामान्यरूपस्य निषेधः । तेनात्र

दिना । निषेधायत इति । निषेधवदाचरति । न तु निषेध एवेत्यर्थः । अन्यथेति । यथा गजस्य स्नानं मदान्धत्वप्रयुक्तेन पुनरपि पांसुप्रक्षेपेण निष्फलमेव, एवं निषेधोऽप्याभासरूपत्वादस्वप्रतीतिप्रयोजनः सन् उक्तवक्ष्यमाणलक्षणप्रकृतगतत्वेन विशेषस्याप्यप्रत्यायने निष्फल एवेत्यर्थः । ननु यदि निषेधः क्रियते, वक्ष्यमाणस्य वक्ष्यमाणत्वं कथं ज्ञायत इत्यत आह — आसूत्रितेति । सामान्योक्त्यांशोक्त्या वा वक्ष्यमाणस्याप्यभिधेयत्वस्य सूचनाददोष इत्यर्थः । कैमर्थक्यपरमित्यादि । यथा 'आक्षेप उपमानस्य' इत्यादौ । आनयनरूपमित्यनेनागूरणशब्दस्यार्थः कथ्यते । यथा 'धुरमर्थाभ्यामथाक्षिप्त' इत्यत्राक्षिप्तशब्दस्यार्थानीतोऽर्थः, एवं वक्ष्यमाणविषयेऽप्याक्षेपशब्दस्यानयनमर्थ इत्यर्थः । एवञ्चेत्यादिना लक्षणवाचिन आक्षेपशब्दस्य प्रकारद्वये निरुक्तिभेदेन भेदं दर्शयित्वा लक्षणभेदमपि दर्शयितुमाह — तत्रोक्तविषय इत्यादिना । यस्यैवेष्टस्य विशेष इति । प्रतिपिपादयिषित इति शेषः । एवमिष्टस्य विशेष इत्यत्रापि व्याख्येयम् । यस्यैवेत्येवकारेण गम्यस्य विशेषस्य गमकस्याक्षेपस्य चैकाश्रयत्वं द्योतयन् वक्ष्यमाणाक्षेपादुक्ताक्षेपस्य भेदं दर्शयति । तत्र हि तयोर्भिन्नाश्रय-

१. 'नेति'. २. 'त्यम, ए' क. ख. पाठः

लक्षणभेदः । विशेषस्य चात्र शब्दानुपात्तत्वाद् गम्यत्वम् ।[1] तत्रोक्तविषये आक्षेपे क्वचिद् वस्तु निषिध्यते क्वचिद् वस्तुकथनं निषिध्यत इति द्वौ भेदौ । वक्ष्यमाणविषये तु कथनमेव निषिध्यते । तच्च सामान्यप्रतिज्ञायां क्वापि विशेषनिष्ठत्वेन क्वचित् पुनरंशोक्तावंशान्तरगतत्वेनेत्यत्रापि द्वौ भेदौ । तदेवमस्य चत्वारो भेदाः । शब्दसाम्यनिबन्धनं सामान्यविशेषभावमवलम्ब्य चात्र प्रकारप्रकारिभावपरिकल्पनम् । क्रमेण यथा —

"बाळअ णाहं दूई तीए पिओ सि त्ति णह्मवावारो ।
सा मरइ तुज्झ अयसो एअं धम्मक्खरं भणमो ॥"

"प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे ! ॥"

त्वम् । तदाह—वक्ष्यमाणेति । तेनात्र लक्षणभेद इति । अत्रानयोः प्रकारयोः क्वचित् प्रतिपिपादयिषितविशेषाश्रयस्य निषिध्यमानत्वं, क्वचित् तत्सम्बन्धिनस्त्वन्यस्येति लक्षणभेदः । तदेवमस्येति । नन्वर्थभेदादन्य उक्तविषय आक्षेपः । वक्ष्यमाणस्य विषयोऽप्यन्य इति स्थितम् । तत् कथं चतुष्प्रकारतेत्यत आह —शब्दसाम्येति । सत्यप्यर्थभेदादाक्षेपस्य भेदे स्वरूपसाम्यादेकत्वेनावभासमानः सामान्यरूप आक्षेपः प्रकारी । उक्तविषयादयः प्रकारा इत्युपचारेण कथनमित्यर्थः । बाळअ इत्यादि ।

बालक! नाहं दूती तस्याः प्रियोऽसीति नास्मद्व्यापारः ।
सा म्रियते तवायश एतद्धर्माक्षरं भणामः ॥

१. 'नमिति । व' क ग पाठ  २ 'न शब्दे पा' क पाठः  ३ 'पा' क. ख, पाठ

"सुहअ ! विळम्बसु थोअं जाव इमं विरहकाअरं हिअअं ।
संठविऊण भणिस्सं अहवा वोळेसु किं भणिमो ॥"

"ज्योत्स्ना तमः पिकवचः क्रकचस्तुषारः
क्षारो मृणालवलयानि कृतान्तदन्ताः ।
सर्वं दुरन्तमिदमद्य शिरीषमृद्वी
सा नूनमाः किमथवा हतजल्पितेन ॥"

आद्ये उदाहरणद्वये यथाक्रमं वस्तुनिषेधेन भणितिनिषेधेन चोक्तविषय आक्षेपः । तत्र चोक्तस्य दूतीत्वस्य वस्तुनो निषेधमुखेन सत्यवादित्वादिर्विशेषः । तथा भण्यमानस्य प्रसादस्य निषेधमुखेनैव कोपोपरागनिवर्तनेनावश्यस्त्रीकार्यत्वं विशेषः । उत्तरस्मिन् पुनरुदाहरणद्वये यथाक्रमं सामान्यद्वारेणेष्टस्यांशोक्तावंशान्तरस्य स्वरूपेण च भणितिनिषेधे वक्ष्यमाणविषय आक्षेपः । तत्र च वक्ष्यमाणस्येष्टस्य भणिस्सं

---

सुहअ इत्यादि ।

सुभग ! विलम्बस्व स्तोकं यावदिदं विरहकातरं हृदयम् ।
संस्थाप्य भणिष्याम्यथवापक्राम किं भणामः ॥

यथाक्रममिति । आद्ये उदाहरणे 'णाहं दूई' इति दूतीत्वलक्षणस्यासत्यवादित्वाद्यविनाभूतस्य वस्तुनः कैमर्थक्यमालोच्यते, द्वितीये तु प्रसीदेत्यादिरूपाया भणितेः कोपलक्षणकारणाभावादभ्युपगमरूपानिष्टप्रसङ्गान्विध्याप्रतिपत्तिविषयत्वेन वैयर्थ्याच्च । सामान्यद्वारेणेति । 'सुहअ विळम्बसु' इत्यादौ भणिस्सं इति भणनमात्रमुक्तं, नतु प्रकारविशेषविशि[illegible] तत्र सामान्योक्तिसहायेन किं भणिमो इति निषेधेन त्वद्विरहो मम[illegible] दुर्विषह इत्यादिर्मरणशङ्कावहः प्रकारविशेष आक्षिप्यते । अं[illegible]त्यादि । अद्य शिरीषमृद्वी सा नूनमा म्रियेतेत्यस्य सा नूनमा इ[illegible]

१. 'जीविने' क. ख. पाठः.

इति प्रतिज्ञातस्य सातिशयो मरणशङ्कोपजनकत्वादिर्विशेषः[1]। तथैव ज्योत्स्नेत्यादावंशोक्तावंशान्तरस्य म्रियत इति प्रतिपाद्यस्याशक्यवचनीयत्वादिर्विशेषः। एवञ्च आक्षेपे इष्टोऽर्थः, तस्यैव निषेधः, निषेधस्यानुपपद्यमानत्वादसत्यत्वं, विशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते। तेन न निषेधविधिः, नापि विहितनिषेधः। किन्तु निषेधेन विधेराक्षेपः। निषेधस्यासत्यत्वाद् विधिपर्यवसानात्। विधिना तु निषेधोऽस्य भेदत्वेन वक्ष्यते। ततश्च हर्षचरिते—अनुरूपो देव्या इत्यात्मसम्भावनेत्यादौ, तथा 'यामीति न स्नेहसदृशं मन्यत' इत्यादावुक्तविषय आक्षेपः। 'केवलं बाल इति सुतरामपरित्याज्योऽस्मि। रक्षणीय इति भवद्भुजपञ्जरं रक्षास्थानम्' इत्यादावाक्षेपबुद्धिर्न कार्या। बालत्वादेरुक्तस्य निषेध्यत्वेनाविवक्षितत्वात्। प्रत्युतात्र बाल्यादिः परित्यागनिषेधकत्वेन प्रतीयते। तेन नायमाक्षेपः। कस्तर्ह्ययं विच्छित्ति-

---

सहायेन किमित्यादिनिषेधेनाशक्यवचनीयत्वादिविशेषविशिष्टमंशान्तरमाक्षिप्यते। तस्यैवेत्येवकारेण निषेधानुपपद्यमानताहेतुमिष्टस्यानिषेध्यत्वं द्योतयति। **न निषेधविधिरिति**। अत्र च निषेधे तात्पर्याभावो हेतुः। विधिराक्षेप इत्यत्र हेतुमाह—*निषेधस्येत्यादि*। *वक्ष्यत इति*। 'अनिष्टविध्याभासश्चे'-त्यत्र। **ततश्चेति**। एवमाक्षेपस्य विभक्तविषयत्वात्। उक्तविषय इति। प्रसीदेति ब्रूयामितिवत्। अत्र चानुरूपो देव्या इत्यादिरूपस्य वस्तुकथनस्य नैभृत्यादिविशेषप्रतिपादनाय निषेधः क्रियते। स च निषेध्यस्येष्टत्वादाभासः। **प्रत्युतेति**। न केवलमुपक्रान्तस्य बाल्यस्य निषेध्यत्वाभावः, यावन्निषेधकत्वमपीत्यर्थः। **कस्तर्हीत्यादि**। अयं विच्छित्तिप्रकारः

---

१. 'षः। ज्यो', २. 'त्यादौ तथाशो', ३ 'र विशेषः वि', ४. 'त्। किञ्च नि.
५. 'नाक्षे' क. ख. पाठः. ६. 'नापि न विहितनि' ख. पाठः. ७. 'ध' क. पाठः.

प्रकारोऽलङ्कार इति चेद्, व्याघाताख्यस्यालङ्कारस्यायं द्वि-तीयो भेद इति वक्ष्यते।

"तदिष्टस्य निषेध्यत्वमाक्षेपोक्तेर्निबन्धनम्।
सौकर्येणान्यकृतये न निषेधकता पुनः॥"

इति पिण्डार्थः। इह तु—

"साहित्यपाथोनिधिमन्थनोत्थं
काव्यामृतं रक्षत हे कवीन्द्राः!।
यत् तस्य दैत्या इव लुण्टनाय
काव्यार्थचोराः प्रगुणीभवन्ति॥
गृह्णन्तु सर्वे यदि वा यथेच्छं
नास्ति क्षतिः कापि कवीश्वराणाम्।
रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः॥"

इति। तथा—

"बाणेन हत्वा मृगमस्य यात्रा निवार्यतां दक्षिणमारुतस्य।
इत्यर्थनीयः शबराधिराजः श्रीकण्ठपृथ्वीधरकन्दरस्थः॥
यद्वा मृषा तिष्ठतु दैन्यमेतन्नेच्छन्ति वैरं मरुता किराताः।
केलिप्रसङ्गे शबराङ्गनानां स हि श्रमग्लानिमपाकरोति॥"

कोऽलङ्कार इत्यन्वयः। द्वितीयो भेद इति। 'सौकर्येण कार्यविरुद्धा क्रिया चे'ति लक्षितः। उक्तमर्थं सुखप्रतिपत्तये श्लोकेन संगृह्णाति—तदिष्टस्येति। निषेध्यत्वं निषेधविषयत्वम्। आक्षेपोक्तेराक्षेपालङ्कारव्यपदेशस्य। सौकर्येणेत्यादि। यद् यत्कार्यसाधकत्वेन सम्भावितं, तस्य तत्कार्यापेक्षया सुकरतमत्वादन्यस्य तद्विरुद्धस्य कार्यस्य निष्पादनाय सिसाधयिषितकार्यस्य निषेधकता नाक्षेपोक्तेर्निबन्धनमित्यर्थः। एवं विहित-

१. 'तस्या' क. ख. पाठः.

इत्यत्र च नाक्षेपभ्रमः कार्यः। विहितनिषेधो ह्ययम्। नचासावाक्षेपः। निषेधेन विधौ तस्य भावादित्युक्तत्वात्। चमत्कारोऽप्यत्र निषेधहेतुक एवेति न[2] तत्सद्भावमात्रेणाक्षेपधीः कार्या। अयं चाक्षेपो ध्वन्यमानोऽपि भवति। यथा—

"गणिकासु विधेयो न विश्वासो वल्लभ! त्वया।
किं किं न कुर्वतेऽत्यर्थमिमा धनपरायणाः॥"

अत्र हि गणिकायां एवोक्तौ तद्योपोक्तिप्रस्तावे नाहं गणिकेति प्रतीयते। न चासौ निषेध एव, गणिकात्वेनावस्थितस्यैव गणिकात्वस्य निषेधनात्। सोऽयं प्रस्खलद्रूपो निषेधो[5] निषेधाभासरूपो वक्त्र्या गणिकायाः शुद्धस्नेहनिबन्धनत्वेन धनविमुखत्वादौ विशेषे पर्यवस्यतीत्युक्तविषय आक्षेपध्वनिरयम्। ननु

"स वक्तुमखिलाञ् शक्तो हयग्रीवाश्रितान् गुणान्।
योऽम्बुकुम्भैः परिच्छेदं शक्तो ज्ञातुं महोदधेः॥"

इत्याक्षेपध्वनावुदाहार्यम्। निषेधस्यैवात्र गम्यमानत्वात्।

निषेधेऽप्याक्षेपभ्रमो न कार्य इत्याह—इह त्वित्यादिना। विहितनिषेधो ह्ययमिति। साहित्येति बाणेनेति च प्रथमाभ्यां श्लोकाभ्यां विहिते रक्षणाभ्यर्थने उत्तराभ्यां गृह्णन्तु सर्वे इति यद्वा मृषा इति च श्लोकाभ्यां निषिध्येते। निषेधेन विधाविति। आक्षिप्त इति शेषः। चमत्कारोऽप्यत्रेत्यादिना आक्षेपत्वनिबन्धनं निषेधसामासत्वं नास्तीत्याह। तत्सद्भावः निषेधसद्भावः। न परमाक्षेपस्य वाच्यत्वम्, उत्प्रेक्षावद् गम्यत्वमपीत्याह—अयं चेत्यादि। उक्तविषय इति। 'बाळअ! णाहं दूई'त्यादिवत्। वस्तुनिषेधस्तत्र वाच्यः, इह पुनर्गम्यः। न त्वित्यस्योदाहार्यमित्यनेन संबन्धः। निषेधस्यैवेति। हयग्रीवगुणवक्तृत्वलक्षणवस्तुनिषेधो गम्य-

१. 'प्र ना', २. 'न नु तद्भा', ३. 'नो भ', ४. 'या उर्ना', ५. 'धाभागा ध' क. ख. पाठः.

न निषेधाभासस्य । महोदधेरम्भःकुम्भपरिच्छेदशक्तिनिदर्शनेन हयग्रीवगुणानां वक्तुमशक्यत्व एवात्र तात्पर्यम् । तन्निमित्तक एवात्र चमत्कारो न निषेधाभासहेतुक इति नाक्षेपध्वनिधीरत्र कार्या । सर्वथेष्टानिष्टस्य निषेधाभासस्य विध्युन्मुखस्याक्षेपत्वमिति स्थितम् ।

इत्थमिष्टनिषेधेनाक्षेपमुक्त्वा समानन्यायत्वादनिष्टविधिनाक्षेपमाह —

**अनिष्टविध्याभासश्च ॥ ३९ ॥**

यथेष्टस्येष्टत्वादेव निषेधोऽनुपपन्नः, एवमनिष्टस्यानिष्टत्वादेव विधानं नोपपद्यते । तत् क्रियमाणं प्रस्खलद्रूपत्वाद् विध्याभासे पर्यवस्यति । ततश्च विधेरुपकरणीभूतो निषेध इति विधिनायं निषेधोऽनिष्टविशेषपर्यवसायी निषेधागूरणा-

मानस्तात्पर्यचमत्कारविषयत्वादनाभासरूप इति नात्राक्षेपध्वनिभ्रमः कार्य इत्यर्थः । सर्वथेति । वाच्यो वा भवतु गम्यो वेत्यर्थः ॥

**समानन्यायत्वादिति** । अविषयनिष्ठत्वेनाभासरूपत्वादितराक्षेपकत्वं समानन्यायता । अनिष्टविध्याभासश्चेत्यत्र चकारेणाक्षेप इत्यस्यानुकर्षः । सङ्गत्यर्थमुपक्षिप्तं समानन्यायत्वमेव दर्शयति — **यथेत्यादिना** । **प्रस्खलद्रूपत्वादिति** । अनिष्टविषयत्वेन बाधितस्वरूपत्वात् । **उपकरणीभूत इति** । अनभिमतविषयत्वादनुपपद्यमानेन विधिना स्वोपपादकतयानुपपत्तिनिरासायाक्षिप्तत्वाद् विधिं प्रत्युपकरणः शेषः सम्पन्न इति केचिद् व्याचक्षते । अन्ये तु निषेधस्यैव तात्पर्यगोचरत्वाद् विधेर्विपर्ययादनुपपद्यमा(ने ? नत्वे)न मत्वर्थीयान्तादुपकरणशब्दाच्च्विप्रत्यय इति व्याचक्षाणाः स्वाक्षेपकतयोपकरणभूतेन विधिनोपकरणवान् भूतो निषेध इत्याहुः । **अनिष्टविशेषपर्यवसायीति** । यद् विधातुमनिष्टमपि विहितं, 'तत्

१ 'स्यात्पर्य' क. ख. पाठः. २. 'च्यो भ' क. ग. पाठः. ३ 'पक्षः क्षे' ख. ग. पाठः. ४. 'पत' ख. पाठः.

त्माक्षेपः। यथा —

"गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्॥"

अत्र कयाचित् कान्तप्रस्थानमनिष्टमप्यनिराकरणमुखेन विधीयते। न चास्य विधिर्युक्तः, अनिष्टत्वात्। सोऽयं प्रस्खलद्रूपत्वेन निषेधमागूरयति। फलं चात्रानिष्टस्य कान्तप्रस्थानस्यासंविज्ञातपदनिबन्धनमत्यन्तपरिहार्यत्वप्रतिपादनम्। इदं च ममापि जन्म तत्रैवेत्याशीःप्रतिपादनेनानिष्टपर्यवसायिना व्यञ्जितम्। यथावा —

"नो किञ्चित् कथनीयमस्ति सुभग! प्रौढाः परं त्वादृशाः
पन्थानः कुशला भवन्तु भवतः को मादृशामाग्रहः।
किन्त्वेतत् कथयामि सन्ततरतिक्लान्तिच्छिदस्तास्त्वया
स्मर्तव्याः शिथिलाः सहंसरुचयो गोदावरीवीचयः॥"

अत्रानभिप्रेतमेव कान्तप्रस्थानं यदा प्रमुख एवाभ्युपगम्य-

---

तन्निष्ठविशेषावगमनहेतुः। ननु गच्छ गच्छसीत्यत्र गमनस्य विधिर्न प्रतीयते। अपितु कामचाराभ्यनुज्ञामात्रम्। तत् कथमस्य विधिरित्यत आह — **अनिराकरणमुखेनेति**। कान्तप्रस्थानस्यानिष्टत्वेन निराकर्तव्यस्याप्यनिराकरणेन विधिरवसीयत इत्यर्थः। अस्य प्रस्थानस्य। फलं चात्रेत्यादि। अत्र विधिमुखेनानिष्टस्य निषेधाक्षेपे। प्रस्थानस्येत्यस्यात्यन्तपरिहार्यस्येत्यनेनान्वयः। **असंविज्ञानपदनिबन्धनमिति**। संविज्ञातं पदं वाचकश्च शब्दो यस्य न स्तः, तदसंविज्ञातपदम्। वाङ्मनसागोचर इति यावत्। तथाविधमतिशायितदुःखावहम्। तद् निबन्धनं हेतुर्यस्यात्यन्तपरिहार्यत्वप्रतिपादनस्य तत् तथा। **अनिष्टपर्यवसायिनेति**। प्रियतमस्यानभिमते मरणे पर्यवस्यता। प्रमुख एवेति। न परोक्षे। अभ्यु-

---

१. 'स्य प्र', २. 'एतच म' क. ख. पाठः.

मानं प्रतीयते, तदायमनिष्टविधिराभासमानं आक्षेपाङ्गम्[2] । स्मर्तव्या इत्यनेन[3] च गमननिवृत्तिरेवोपोद्वलिता । तस्मादयमपि प्रकार आक्षेपस्य समानन्यायतया[4] विधानबलेनोक्तः ॥

आक्षेप इष्टनिषेधेऽनिष्टविधौ चानुपपद्यमानत्वाद् विरुद्धत्वमनुप्रविष्टम् । एतत्प्रस्तावेन विरोधगर्भोऽलङ्कारवर्गः प्रक्रियते । तत्रापि विरोधालङ्कारस्तावल्लक्ष्यते —

**विरुद्धाभासत्वं विरोधः ॥ ४० ॥**

इह जात्यादीनां चतुर्णां पदार्थानां प्रत्येकं तन्मध्य एव सजातीयविजातीयाभ्यां[5] विरोधिभ्यां सम्बन्धे विरोधः ।

---

**परगम्यमानं प्रतीयत** इति । पन्थानः कुशला भवन्त्वित्यादिभणितिभङ्ग्या । ननूत्तरार्धे किन्त्वेतदित्यादिवचोभङ्ग्या प्रस्थानमभ्युपेत्यैव कस्यचित् कार्यस्याभ्यर्थितत्वप्रतीतेः प्ररोहेऽपि कान्तप्रस्थानस्याभ्युपगमः प्रतीयते । तत् कथं प्रमुख एवेत्युक्तमत आह — **स्मर्तव्या इत्यनेने**ति । अयमर्थः — एवंविधा गोदावरीवीचयस्त्वद्विरहे मम सातिशयतापहेतवो भवेयुः । ताश्च प्रस्थितेन त्वया यदि स्मर्येरन्, तदवश्यं गमनोद्यमो निवर्तेतेति गमननिवृत्तिहेतुतयैव स्मरणस्य प्रस्तावः, नतु कर्तव्यतयेति । अतः प्रस्थानस्य प्ररोहेऽनभ्युपगतिरेवेति विध्याभासत्वादिदमप्युदाहरणं युक्तमेवेति । एतत्प्रतिपादनार्थमेवोदाहृतेऽप्युदाहरणोपन्यासः ॥

एतत्प्रस्तावेन विरुद्धत्वप्रस्तावेन । **विरोधग(र्भे ? र्भ इ)ति** । विरोधालङ्कारेऽपि विरोधमात्रस्य नालङ्कारत्वम्, अपितु समाधिमत एवेति विरोधगर्भत्वं द्रष्टव्यम् । **प्रक्रियत** इति । सप्रकारं प्रदर्श्यत इत्यर्थः । **विरुद्धाभासत्वमि**ति । अविरुद्धत्वेऽपि विरुद्धवदवभासमानो विरुद्धाभासः, तस्य भावस्तत्त्वम् । **जात्यादीनामि**ति । जातिगुणक्रियाद्रव्याणाम् । तन्मध्ये जात्यादिमध्ये । **सजातीयविजातीयाभ्यामि**ति । जातेर्जात्यन्तरं सजातीयः पदार्थः । गुणादित्रयं विजातीयः । एवं गुणादि-

---

१. 'नश्चाक्षे', २. 'ङ्गमित्य', ३. 'न ग', ४. 'तानुवि', ५. 'भ्या स' क, ख. पाठः.

स च समाधानं विना प्ररूढो दोषः। सति तु समाधाने प्रमुख एवाभासमानत्वाद् विरोधाभासः। तत्र[2] च जातिविरोधस्य जात्यादिभिः सह चत्वारो विरोधाः[3]। गुणस्य गुणादिभिः सह त्रयः। क्रियायाः क्रियाद्रव्याभ्यां सह द्वौ। द्रव्यस्य द्रव्येण सहैकः। तदेवं दश विरोधभेदाः। तत्रोदाहरणं दिङ्मात्रेण[4] यथा—

"परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥"

अत्र जडीकरणतापकरणयो[5]र्विरोधो वस्तुसौन्दर्येणाप्राप्तिपर्यवसायिना परिह्रियते। तथा—

"अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः।
क एवं जानीति निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमि[6]मकरमापास्यति मुनिः॥"

अत्र जलनिधिः पीत इति द्रव्यक्रिययोर्विरोधो मुनिगतेन

ष्वपि द्रष्टव्यम्। स च समाधानमित्यादि। यथा निदाघो मेघदुर्दिन इत्यादौ। जात्यादिभिरिति। सजातीयया जात्या विजातीयैर्गुणक्रियाद्रव्यैश्च। एवं गुणादिभिरित्यादावपि। जडीकरणतापकरणयोर्विरोध इति। विकारलक्षणैककर्तृनिष्ठतया निबद्धत्वात्। समाधानं दर्शयति— वस्तुसौन्दर्येणेत्यादिना। द्रव्यक्रिययोरिति। ननु जलनि-

१. 'बाधभा'. २. 'त्र जा', ३. 'भेदा.। गु', ४ 'त्रे य', ५. 'यो: क्रिययोर्वि'. ६. 'नि' ख. ग. पाठः ७ 'र्शा' ग. पाठः.

महाप्रभावत्वेन समाधीयते । एवमन्यदपि ज्ञेयम् । विविक्त-

धीनां बहुत्वात् कथं द्रव्यत्वम् । किञ्च अब्धयोऽप्यगम्भीरा इति जातिगुण-विरोधमुदाहरता काव्यप्रकाशकारेणाब्धेर्जातित्वमङ्गीकृतम् । उच्यते । एन-मिति पुरोवर्तित्वेन निर्दिष्टस्य जलनिधेरेकत्वेन द्रव्यत्वमित्यदोषः । अथवा जलनिधिः पीत इत्यनेन जलनिधिपानलक्षणक्रियामात्रं निर्दिश्यते । तस्या-गस्त्यमुनिलक्षणेन द्रव्येण विरोधो द्रष्टव्यः । एवमन्यदपीति । विरोध-भेदाष्टकम् । तत्र चतुर्विधो जातिविरोधो यथा —

वेशन्तास्तव मानसेन महता पाथोधयः कल्पिताः
कोलम्बाधिपते ! यशोगिरमलैर्मुक्तारुचः श्यामलाः ।
तापार्तिप्रशमावहाः प्रतपता शत्रून् प्रतापोष्मणा
कल्पार्काः परमाणुरुन्नतिजुषा दोष्णा च हेमाचलः ॥

अत्र पाथोधिमुक्तारुचिकल्पार्कपरमाणुत्वानां जातीनां यथाक्रमं वेशन्तत्व-श्यामलत्वतापार्तिशमनहेमाचललक्षणैर्जातिगुणक्रियाद्रव्यैर्विरोधः । समा-धिश्च मनःप्रभृतीनां महत्त्वाद्यतिशयस्य विवक्षितत्वात् । त्रिविधो गुणवि-रोधो यथा —

रूक्षा खलेषु भवतो मधुरापि वाणी
विश्वं गुणाश्च विशदा अपि रञ्जयन्ति ।
अश्रान्तदायिनमवेक्ष्य यदूद्वह ! त्वां
कर्णं व्यवस्यति मनीषिजनः कदर्यम् ॥

अत्र माधुर्यवैशद्यकदर्यत्वानां गुणानां रौक्ष्यरञ्जनकर्णलक्षणैर्गुणक्रियाद्रव्यैः क्रमेण विरोधः । समाधिश्च खलदुश्शीलतानुरञ्जनलक्षणार्थान्तरवर्णनीय-गतौदार्यातिशयानां विवक्षितत्वात् । द्विविधः क्रियाविरोधो द्रव्यविरोधश्च यथा —

भजन्ति रिपवः क्षयं जहति च त्वयि क्रुध्यति
स्थलीभवति चाम्बरं तव बलोद्धतैः पांसुभिः ।
अभूच्च विजयोर्जितैर्लवणसागरस्तावकै-
र्यशोभिरतिनिर्मलैर्यदुनरेन्द्र ! दुग्धार्णवः ॥

अत्र क्षयप्राप्तिस्थलीभवनयोः क्षयत्यागाम्बराभ्यां क्रियाद्रव्याभ्यां लवणसा-

१ 'र्ति द्र' ख. पाठः.

विषयत्वेन चास्य दृष्टेः श्लेषगर्भे विरोधप्रतिभोत्पत्तिहेतुः श्लेष औद्भटानाम्। दर्शनान्तरे तु सङ्करालङ्कारः। यथा— 'सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च'त्यादौ विरोधिनोर्द्वयोरपि श्लिष्टत्वे। एकस्य तु श्लिष्टत्वे 'कुपतिमपि कलत्रवल्लभम्'इत्यादौ। एकविषयत्वे चायमिष्यते। विषयभेदे त्वसङ्गतिप्रभृतिर्वक्ष्यते॥

---

गरस्य द्रव्यस्य दुग्धार्णवेन द्रव्येण च विरोधः। समाधिश्च क्षयशब्दस्य नाशनिवासलक्षणार्थद्वयप्रतीतेर्बलरजोभूयस्त्वस्य यशोवैमल्यातिशयस्य च विवक्षितत्वात्। विविक्तविषयत्वेन श्लेषशून्यविषयत्वेन। अनेन च विरोधस्य दौर्बल्यहेतुसावकाशत्वं दर्शितम्। अस्य दृष्टेः विरोधस्य दर्शनात्। औद्भटानाम् उद्भटमतानुसारिणाम्। तन्मते हि श्लेषालङ्कारस्यालङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वं निरटङ्कि। **दर्शनान्तर** इति। श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरमित्येवंरूपे काव्यप्रकाशकारादिमते। **सङ्करालङ्कार** इति। उभयोरप्यत्र लब्धावकाशत्वेनाङ्गाङ्गिभावलक्षणः सङ्करः। तत्र प्रमुखेसानस्य समाधेश्च विरोधपरिहारयोरर्थद्वयप्रतीतिमन्तरेणासम्भवात् श्लेषस्याङ्गत्वं विरोधस्याङ्गित्वम्। चमत्कारकारित्वे तु विपर्ययः। **द्वयोरपि श्लिष्टत्व** इति। बालशब्दस्य बवयोरैक्येन केशबाल्यविशिष्टलक्षणार्थद्वयवृत्तित्वात्। भास्वच्छब्दस्य दीप्तिमदर्कवृत्तेश्च। **एकस्य त्विति**। कुपतिशब्दस्यैव भूपतिकुत्सितपतिलक्षणार्थद्वयाभिधानात्। अस्य विरोधालङ्कारस्य वक्ष्यमाणानामसङ्गत्यादीनां चाभासमानविरोधत्वे तुल्येऽपि विशेषप्रकारमाह—**एकविषयत्व** इति। अत्र विषयशब्देनाश्रय उच्यते। यत्र द्वयोर्विषयैक्येन विरोधप्रादुर्भावः, तत्र विरोधालङ्कारः। यत्र तु भिन्नविषयत्वेन, तत्रासङ्गतिः। प्रभृतिग्रहणेन विषमादयः परिगृह्यन्ते। तत्र च क्वचिद् विषयभेद एव विरोधस्य निमित्तम्। यथासङ्गतौ। क्वचित् स्वतो

---

१. 'र्भे', २. 'भेत्त वि', ३. 'श्लेषत्वे' क. ख. पाठः. ४. 'रस' ख पाठः. ५. 'ध ना', ६. 'तुकसा', ७. 'अङ्गा', ८. 'यः। द्व', ९. 'त्राभासन', १०. 'द्व', ११. 'रो रि' ख. ग. पाठः.

एवं[1] विरोध[2]मुक्त्वा विरोधमूलान्यल[3]ङ्कारान्तराण्युच्यन्ते। तत्रापि कार्यकारणभावमूलत्वेन विभावनां तावदाह—

**कारणाभावे कार्यस्योत्पत्तिर्विभावना ॥ ४१ ॥**

इह कारणान्वयव्यतिरेकानुविधानात् कार्यस्य कारणमन्तरेणासम्भवः। अन्यथा विरोधो दुष्परिहरः स्यात्। यदा तु कयाचिद् भङ्ग्या तथाभाव उपनिबध्यते, तदा विभावनाख्योऽलङ्कारः। विशिष्टतया कार्यस्य भावनात्। सा च भङ्गिर्विशिष्टकारणाभावोपनिबद्धा। अप्रसिद्धं तु कारणं वस्तुतोऽस्तीति विरोधपरिहारः। कारणाभावेन चेहोपक्रान्तत्वाद् बलवता कार्यमेव बाध्यमानत्वेन प्रतीयते, न तु तेन तत्र कारणाभावः। इत्यन्योन्यबाधकत्वानुप्राणिताद् विरोधा-

---

विरुद्धयोर्भिन्नविषयत्वम्। यथा विरूपकार्योत्पत्तिलक्षणे विषमालङ्कारे। इह तु नैसर्गिकस्यापि विरोधस्य विषयैक्य एव स्वरूपप्रतिलम्भः। विषयभेदे त्वनुदय एव ॥

विरोधमूलानीति। विरोधाभासमूलानीत्यर्थः। अनेन पूर्वमुक्तं विरोधगर्भत्वमेषां दर्शयति। तत्रापीति। तेष्वलङ्करणेष्वपि। सूत्रे कारणाभाव इत्यत्र कारणमात्रस्याभावो न विवक्षितः, किन्तु विशिष्टस्य कारणस्येति दर्शयितुमाह— इहेति। अन्यथा कारणमन्तरेण सम्भवे। विशिष्टतयेति। वैशिष्ट्यं चेतरकार्यसाधारणकारणाप्रस्तुतत्वम्। ननु यत्र समाधिमत्त्वादागुणानभासी विरोधाभासोऽस्ति, तत् किमर्थं विरोधालङ्कारभेदत्वेनानुक्त्वा पृथगेषा लक्षिता। अत आह— कारणाभावेन चेति। उपक्रान्तत्वाद् बलवतेति। असञ्जातविरोध्यवस्थायां लब्धस्वरूपत्वाद् बलवत्त्वम्। न तु तेनेति। बाध्यमानत्वेन प्रतीयत इत्यनुषज्यते। अन्योन्यबाधकत्वेति। यथा जडीकरणतापकरणयोरन्यतरस्य

---

१ 'मुक्त्वा वि', २ 'ध वि', ३ [illegible], ४ 'रो ति', ५ [illegible], ६ [illegible] पाठ., ७ [illegible] पाठ.

लङ्काराद् भेदः । एवं विशेषोक्तौ कार्याभावेन कारणसत्ताया एव बाध्यमानत्वमुन्नेयम् । येन सापि विरोधाद् भिन्ना स्यात् । इहे[3] च लक्षणे यद्यप्यन्यैः कारणपदस्थाने क्रियाग्रहणं कृतं, तथापीह कारणपदमेव विहितम् । नहि सर्वैः क्रियाफलमेव कार्यमभ्युपगम्यते । वैयाकरणैरेव तथाभ्युपगमात् । अतो विशेषमनपेक्ष्य सामान्येन कारणपदमेवेह निर्दिष्टम् । यथा —

"असम्भृतं मण्डनमङ्गयष्टे-
रनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात् परं साथ वयः प्रपेदे ॥"

अत्र द्वितीये पादे मदस्य प्रसिद्धं यदासवाख्यं करणं, तदभावेऽपि यौवनहेतुकत्वेनोपनिबन्धः कृतः । मदस्य द्वैविध्ये-

पूर्वसिद्धत्वाभावेन तुल्यबलत्वादन्योन्यबाध्यबाधकभावः, नैवमत्रेति तस्मादस्या भेद इत्यर्थः । एवमित्यादि । पूर्वसिद्धत्वेन बलवता कार्याभावेन कारणपौष्कल्यस्यैव बाधः । नतु कारणपौष्कल्येन कार्याभावस्य । अन्यैः उद्भटादिभिः कारणेभ्यः क्रियामुखेन कार्योत्पत्तेः प्रातीतिकेन रूपेण परिदृश्यमानत्वात् क्रियैवाव्यवहितं कारणमिति मत्वा

"क्रियायाः प्रतिषेधे या तत्फलस्य विभावना"

इति लक्षयद्भिः । कारणपदमेवेति । कार्यं जनयतां कारणानामवान्तरव्यापारः क्रिया, नतु कार्यं प्रति हेतुः, द्रव्यादय एव हेतव इति भावः । द्वितीये पाद इति । अनासवाख्यं करणं मदस्येत्यत्र । प्रसिद्धमित्यनेन विशिष्टकारणाभावोपनिबन्धो निदर्शितः । यौवनहेतुकत्वेनेत्यनेन विरोधपरि-

१. 'त नेय' क ख पाठः. २. 'द ल' ख. पाठः. ३. 'पि च य' क. पाठः. ४. 'णमे', ५. 'उदाहरणम् —अ', ६. 'तुन्ने' क ख. पाठः. ७. 'भेऽपि माद्य' ख. पाठः. ८. 'स्य व्यतिरिक्तविभा' ख. ग. पाठः.

इह समग्राणि कारणानि नियमेन कार्यमुत्पादयन्तीति[1] प्रसिद्धम्। अन्यथा समग्रत्वस्यैवाभावप्रसङ्गात्। या तु सत्यपि सामग्री न जनयति कार्यं, सा केश्चिद्[2] विशेषमभिव्यङ्क्तुं प्रयुज्यमाना विशेषोक्तिः। सा च द्विधा—उक्तनिमित्ता अनुक्तनिमित्ता च। अचिन्त्यनिमित्ता त्वनुक्तनिमित्तैव। अनुक्तस्य चिन्त्याचिन्त्यत्वेन द्विविधत्वात्। क्रमेणोदाहरणं[3]—

"कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे[4]॥"

"आहूतोऽपि[5] सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि।
गन्तुमना अपि पथिकः सङ्कोचं नैव शिथिलयति॥"

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न हृतं बलम्॥"

अत्र सत्यपि दाहलक्षणेऽविकले कारणेऽशक्तत्वाख्यस्य कार्यस्यानुत्पत्तिः शक्तिमत्त्व[6]स्वरूपेण विरुद्धेन धर्मेणो[7]पनिबद्धा। अवार्यवीर्यत्वं चात्रोक्तं निमित्तम्[8]। तथा आहूतत्वादयः सङ्कोचशिथिलीकारहेतव इति तेषु सत्स्वपि तस्यानुत्पत्तौ प्रियतमास्वप्नसमागमाद्यनुक्तं संचिन्त्यं[9] निमित्तम्[10]। तथा तनुहरणे कारणे सत्यपि बलहरणस्य कार्यस्यानुत्पत्तौ निमित्तमनुक्तमचिन्त्यमेव, प्रतीत्यगोचरत्वात्। कार्यानुत्प-

मन्तर्भावयति—अचिन्त्यनिमित्ता त्विल्यादिना। कार्यानुत्प-

१. 'नि ति' ग. पाठः. २. 'कि', ३. 'न यथा—क', ४. 'कुसुमधन्वने॥', ५. 'ति', ६. 'स्वरू', ७. 'ण सूर', ८. 'तम्। आह्वानाद', ९ 'चिन्त्यनि', १०. 'तम्। तनु' क. ग. पाठः.

त्त्विश्चात्र क्वचित् कार्यविरुद्धोत्पत्त्या निबध्यते । एवं विभावनायामपि कारणाभावः कारणविरुद्धमुखेन क्वचित् प्रतिपाद्यते । तथाच सति —

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि चौर्यसुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥"

इत्यत्र विभावनाविशेषोक्त्योः सन्देहसङ्करः । तथाहि — उत्कण्ठाकारणं विरुद्धं यः कौमारहर इत्यादि निबद्धमिति विभावना । तथा यः कौमारहर इत्यादेः कारणस्य कार्यं विरुद्धं चेतः समुत्कण्ठत इत्युत्कण्ठाख्यं निबद्धमिति विशेषोक्तिः । विरुद्धमुखेनोपनिबद्धत्वात् केवलमस्पष्टत्वम् । साधकबाधकप्रमाणाभावाच्चात्र सन्देहसङ्करः । या तु "एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः" इति विशेषोक्तिर्लक्षिता, सास्मद्दर्शने रूपकभेद एवेति न पृथग् वाच्या ॥

---

त्त्विश्चेत्यादि । यथा शक्तिमानित्यादौ । तथाच सतीति । कारणाभावकार्यानुत्पत्त्योर्विरोधमुखेनोपनिबन्धे सति उत्कण्ठाकारणस्याभिनवत्वस्याभावः स एवेत्यादिना यातयामत्वलक्षणविरोधिमुखेनोपनिबद्धः । यातयामत्वलक्षणस्य कारणस्य यत् कार्यमुपेक्षणं तस्याभावः उत्कण्ठात्मकविरोधिमुखेनोपनिबद्धः । विरुद्धमुखेनोपनिबद्धत्वादिति । उभयोः कारणाभावकार्याभावयोरिति शेषः । अन्यथैकतरोपनिबन्धेऽप्यस्पष्टत्वे 'कर्पूर

---

१. 'परित्र', २ 'सुन्दरमस्य', ३. 'मर्पाद' क. ग. पाठः. ४. 'स्याभा' ग ग पाठ

अतिशयोक्तौ लक्षितायामपि कश्चिद् भेदः कार्यकारणप्रस्तावेनेहोच्यते—

कार्यकारणयोः समकालत्वे पौर्वापर्यविपर्यये चातिशयोक्तिः ॥ ४३ ॥

इह नियतपूर्वकालभावि कारणं नियतपश्चात्कालभावि च कार्यमिति कार्यकारणयोर्लक्षणं प्रसिद्धम् । यदा तु विशेषप्रतिपादनाय तयोरेतद्रूपापगमः क्रियते, तदातिशयोक्तिः । एतद्रूपापगमश्च कालसाम्यनिबन्धनः कालविपर्यासनिबन्धनश्चेति द्विधा भवन्नतिशयोक्तिमपि द्वैविध्येऽवस्थापयति । क्रमेणोदाहरणं—

"पश्यत्सूद्गतसान्द्रविस्मयरसप्रोत्फुल्लनेत्रोत्पलं
भूपालेषु तवात्र सूक्ष्मनिशिते निस्त्रिंशधाराध्वनि ।
कीर्त्या च द्विपतां श्रिया च युगपद् राजन्यचूडामणे !
हेलानिर्गमनप्रवेशविधिना पश्येन्द्रजालं कृतम् ॥"

"पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।

---

इव दग्धोऽपी'त्यादावप्यसष्टत्वप्रसङ्गः । रूपकभेद एवेति । अधिरोपितवैशिष्ट्यं रूपकमित्यर्थः ॥

कश्चिद् भेद इति । अतिशयोक्तिनिरूपणे प्रपञ्चार्थं लक्षयिष्यत इति निर्दिष्टः । कार्यकारणयोरित्यादि । कार्यकारणयोरव्यभिचारित्वाशुकारित्वलक्षणस्यातिशयस्योक्तिरतिशयोक्तिरिति सामान्यलक्षणम् । समकालत्व इत्यादिना भेदनिर्देशः । विशेषेति । अव्यभिचारित्वादिरूपो विशेषः ।

---

१. 'तत्काल्पूर्वभा', २. 'था द्राविका', ३. 'षे स्था', ४. 'ण यथा—प', ५ 'ता' प. रा. पाठः. ६ 'दरत' क. पाठः.

नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि च निवृत्ता मानिनीमानचर्चा ॥"

पूर्वत्र प्रौढोक्तिनिर्मितेऽर्थे शत्रुश्रीप्रवेशः कीर्तिनिर्गमनस्य हेतुरिति भिन्नकालयोस्तुल्यकालत्वं निबद्धम्। उत्तरत्र तु माननिवृत्तिः स्मरशरप्रकिरणकार्येति तयोरुपपन्नं पौर्वापर्यं व्यत्ययेन निर्दिष्टमित्यतिशयोक्तिः। कार्यस्य चाशुभावाख्यो विशेषः प्रतिपाद्यते ॥

तयोर्विभिन्नदेशत्वेऽसङ्गतिः ॥ ४४ ॥

तयोरिति कार्यकारणयोः। यद्देशमेव कारणं, तद्देशमेव कार्यं दृष्टम्। न तु महानसदेशस्थो वह्निः पर्वतदेशस्थं धूमं जनयति। यदा त्वन्यदेशस्थं कारणमन्यदेशस्थं च कार्यमुपनिबध्यते, तदोचितसङ्गतिनिवृत्तेरसङ्गत्याख्योऽलङ्कारः। स च विरोधिकार्यकारणभावप्रस्तावादिह लक्ष्यते। यथा—

प्रौढोक्तिनिर्मित इति। निस्त्रिंशधारायाः कीर्त्तिनिर्गमस्य द्विपल्लक्ष्मीप्रवेशस्य च बहिरसम्भवित्वात् कवेः कविनिबन्धस्य वा प्रौढोक्त्या निर्मिते। व्यत्ययेनेति। कार्यभूताया माननिवृत्तेर्भूतकालविषयया निष्ठया पूर्वकालत्वस्य, कारणभूतस्य स्मरशरकिरणस्य वर्तमानकालविषयेण लटा साध्यमानत्वस्फुरणात् पश्चात्कालत्वस्य च प्रतीतेश्च। एषा चातिशयोक्तिकारणस्य वास्तव कार्यजनकत्व कल्पिमसमर्पितेनाशुभावाव्यभिचारविशिष्टेन कार्यजनकत्वेन भेदेऽप्यभेदाध्यवसितमित्यतिशयोक्तिभेदत्वेन पूर्वं निरूपिता। सम्प्रति कार्यकारणनिष्ठत्वेनास्याः कार्यकारणविच्छित्त्याश्रयेणालङ्कारमध्ये प्रस्तावः ॥

उचितसङ्गतीति। सङ्गतेरौचित्यमेकदेशवर्तित्वम्। विरोधि-

१. 'च', २. 'स्पष्ट', ३. 'क। न', ४. 'देशि', ५. 'नि' क. ग पाठः. ६. 'दि क पाठ ७. 'देति', ८. 'र। दि', ९. 'पा', १०. 'होरपने' क. ग. पाठः.

"प्रायः पथ्यपराङ्मुखा विपयिणो भूपा भवन्त्यात्मना
निर्दोषान् सचिवान् भजत्यतिमहाँल्लोकापवादज्वरः ।
धन्याः श्लाघ्यगुणास्त एव विपिने सन्तोषभाजः परं
वाह्योऽयं वरमेव सेवकजनो धिक् सर्वथा मन्त्रिणः ॥"

अत्र पथ्यपराङ्मुखत्वमुपलम्भविपर्ययस्य भिन्नदेशोहेतुरित्य-सङ्गतिः । एवं —

"सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरभरं धत्ते सखेदा वयम् ।
सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥"

इत्यत्र ज्ञेयम् । अत्र च बाल्यनिमित्तमप्रगल्भवचनेमन्यदन्यच्च स्मरनिमित्तमिति तयोरभेदाध्यवसायः । एवमन्यत्र ज्ञेयम् ॥

---

कार्यकारणभावेति । विरोधश्च कार्येण कारणस्यान्वयव्यतिरेकयोरननुविधानम् । विशेषोक्तावन्वयस्य, अतिशयोक्तावपि कारणसत्तामनपेक्ष्य तुल्यकालं पूर्वमेव वा कार्यस्योत्पत्तेर्व्यतिरेकाननुविधानकम् । स्वदेशे कारणेऽसत्यपि कार्यस्योत्पादादसङ्गतावपि तदेव । सा बालेत्यादि । ननु बाल्यनिमित्ताप्रगल्भवचस्त्वं बाल्येन हेतुना सह बालायामेव वर्तते, बालालम्बनस्मरजनितं तु स्मरेण सह कान्त एव वर्तत इति कथं कार्यकारणयोर्भिन्नदे[11]शत्वमित्याशङ्क्य भेदेऽभेदलक्षणयातिशयोक्त्यैकत्वे भिन्नदेशत्वमिति परिहरति — बाल्यनिमित्तमित्यादिना । एवमन्यत्रेति । कातर्यादौ । एवमप्यसङ्गतिर्भवतीति दर्शनायोदाहरणान्तरोपन्यासः ॥

---

१. 'तमारन, २. 'मस्म. ३. 'शो हे', ४. 'र्धपर', ५. 'न चा', ६. 'नत्वमन्याहगन्यच्च' क. ख. पाठः. ७. 'घरमि' क. पाठः. ८. 'नम् । स्व', ९. 'दनाद' ख. पाठः. १०. 'सक्र' क. पाठः. ११ 'कार्यत्व' रा. पाठः.

**विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसङ्घटना च विषमम् ॥ ४५ ॥**

विरोधप्रस्तावेनेह लक्षणम् । तत्र कारणगुणप्रक्रमेण कार्यमुत्पद्यत इति प्रसिद्धौ यद् विरूपं कार्यमुत्पद्यमानं दृश्यते, तदेकं विषमम् । तथा कश्चिदर्थं साधयितुमुद्यतस्य न केवलं तस्यार्थस्याप्रतिलम्भः, यावदनर्थप्राप्तिरपीति द्वितीयं विषमम् । अत्यन्ताननुरूपसङ्घटनयोर्विरूपयोश्च सङ्घटना तृतीयं विषमम् । अननुरूपसंसर्गो हि विषमम् । क्रमेण यथा —

"सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥"

"तीर्थान्तरेषु मलपङ्कवतीर्विहाय
दिव्यास्तनूस्तनुभृतः सहसा लभन्ते ।
वाराणसि! त्वयि तु मुक्तकलेवराणां
लाभोऽस्तु मूलमपि यात्यपुनर्भवाय ॥"

---

**विरूपकार्ये**त्यादि । अस्य विषमस्य सामान्यलक्षणं स्वयमेव वक्ष्यति — 'अननुरूपसंसर्गो हि विषममि'ति । अत्र विरूपकार्ये कारणगुणविरुद्धेन गुणेन कार्यसंसर्गादननुरूपसंसर्गः, द्वितीये इष्टसिद्ध्यर्थस्य व्यापारस्यानिष्टफलयोगात् । तृतीये पुनः स्फुट एव सः । **विरोधप्रस्तावेने**ति । विरोधश्चात्र प्रसिद्धेरन्यथाभावः । स चाद्ये कार्येण कारणगुणाननुविधानाद्, द्वितीये अर्थसाधनतया प्रसिद्धस्यानर्थोत्पादनात्, तृतीये अघटमानत्वेन प्रसिद्धयोर्घटनात् । **यावदनर्थप्राप्तिरपी**ति । अत एव विशेषोक्तेर्भेदः । विरूपयोरित्यस्य व्याख्या — अत्यन्ताननुरूपसङ्घटनयोरिति ।

---

१. 'मम् । क' ग, घ. पाठः.   २. 'र्नि' ख. पाठः.

"अरण्यानी क्वेयं धृतकनकसूत्रः क्व स मृगः
क्व मुक्ताहारोऽयं क्व च स पतगः क्वेयमबला ।
क्व तत् कन्यारत्नं ललितमहिभर्तुः क्व च वयं
स्वमाकूतं धाता किमपि निभृतं पल्लवयति ॥"

अत्र कृष्णवर्णाच्छुक्लवर्णोत्पत्तिः, कलेवरात्यन्तापहारलक्षणानर्थोत्पत्तिः, अत्यन्ताननुरूपाणां चारण्यान्यादीनां परस्परसङ्घटनं क्रमेण मन्तव्यम् । केवलमनर्थोत्पत्तिरत्र व्याजस्तुतिपर्यवसायिनीति शुद्धोदाहरणमभ्यूह्यम् ॥

**तद्विपर्ययः समम् ॥ ४६ ॥**

विषमवैधर्म्यादिह प्रस्तावः । यद्यपि विषमस्य भेदत्रयमुक्तं, तथापि तच्छब्देन सम्भवादन्त्यो भेदः परामृश्यते । पूर्वकभेदद्वयविपर्ययस्यानलङ्कारत्वात् । अन्त्यभेदे विपर्ययस्तु

व्याजस्तुतीति । निन्दामुखेन गङ्गायाः स्तुतिप्रतीतेः । शुद्धोदाहरणमिति । अलङ्कारान्तरासङ्कीर्णम् । यथा—

करमात्रमनिच्छवः प्रदातुं कृतवन्तः सह ये त्वया विरोधम् ।
त इमे यदुनाथ! पार्थिवास्ते निखिलां प्रादिषत स्वराज्यलक्ष्मीम् ॥

अत्र विरोधक्रियया न परमभिमतस्य कराप्रदानस्यानवाप्तिः, यावदनभिमतस्य सकलराज्यप्रदानस्यावाप्तिरपि ॥

सूत्रे तद्विपर्यय इति तच्छब्देन भेदत्रितयविशिष्टं विषमं यद्यपि परामर्शनीयं, तथापि विरूपसङ्घटनालक्षणान्त्यभेदविशिष्टमेव परामृश्यत इत्याह—तथापीति । सम्भवाद् अलङ्कारत्वसम्भवात् । पूर्वकभेदद्वयविपर्ययस्य सरूपकार्यार्थोत्पत्तिलक्षणस्य । अनलङ्कारत्वादिति । स्वतः

१. 'द्भवत्व', २. 'मृगम् ।' क. ग पाठः, ३. 'ते । न पू' ग. पाठः. ४. 'ममपि तद्विप', ५. 'स्याल' ग पाठः. ६. 'द्' ख. ग. पाठः.

चारुत्वात् समाख्योऽलङ्कारः । स चाभिरूपानभिरूपविषयत्वेन द्विविधः । आद्यो यथा —

"त्वमेवंसौन्दर्या स च रुचिरतायां परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अयि द्वन्द्वं दिष्ट्या तदिह सुभगे! संवदति वा-
मतः शेषं चेत् स्याज्जितमथ तदानीं गुणितया ॥"

अत्राभिरूपस्यैव नायकयुगलस्योचितं सङ्घटनमाशंसितम् ।

द्वितीयो यथा —

"चित्रं चित्रं बत बत महच्चित्रमेतद् विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥"

अत्रानभिरूपाणां निम्बानां काकानां च समागमः प्रशंसितः ।
आनुरूप्यात् समत्वव्यपदेशः ॥

विरोधमूलं विचित्रं लक्षयति —

स्वविपरीतफलनिष्पत्तये प्रयत्नो विचित्रम् ॥ २३ ॥

---

प्रासत्वेन वैचित्र्याभावात् । चारुत्वादिति । [illegible] नस्य कादाचित्कत्वेनासुलभत्वात् । आशंसितमिति । [illegible] स्यादित्यनेन । अत्यन्तानभिरूपनिम्बकाक[illegible] याक्षिप्तचित्तत्वेन वस्तुस्थितं चित्रमित्युक्तं [illegible] ।

विरोधमूलमिति । [illegible] प्रसङ्गेन लक्षयित्वा पूर्वोक्त[illegible]

1. [illegible]

यस्य हेतोर्यत् फलं, तस्य यदा तद्विपरीतं भवति, तदा तद्विपरीतफलनिष्पत्त्यर्थं कस्यचित् प्रयत्न उत्साहो विचित्रालङ्कारः। आश्चर्यप्रतीतिहेतुत्वात्। न चायं प्रथमो विषमालङ्कारप्रकारः। स्वनिषेधमुखेन वैपरीत्यप्रतीतेः। विपरीतप्रतीत्या तु स्वनिषेधस्तस्य विषयः। यथा—'तमालनीला शरदिन्दुपाण्डु' इत्यादौ। इह त्वन्यथा प्रतीतिः। यथा—

"घेत्तुं मुञ्चइ अहरो अण्णत्तो वळइ पेक्खिउं दिट्ठी।
घडिदुं विहडन्ति भुआ रआअ सुरअम्मि वीसामो॥"

अत्र मोचनवलनविघटनविश्रमाणां यथाक्रमं ग्रहणप्रेक्षणघटनरमणानि विपरीतानि फलानि प्रयत्नविषयत्वेन निबद्धानि।

---

त्यर्थः। स्वविपरीतेति। सूत्रे स्वशब्देन स्वीयमुच्यते। तच्च फलसंनिध्युपस्थापितहेतुसम्बन्धि गृह्यत इत्याह—**यस्य हेतोरित्यादिना**। तस्य हेतोः। तद्विपरीतं फलविपरीतम्। प्रथमः विरूपकार्योत्पत्तिलक्षणः। स्वनिषेधेति। स्वशब्देन हेतुः परामृश्यते। यदि ग्रहीतुमिच्छति, तत् किमिति मुञ्चतीति मोचनस्य हेतोर्निषेधमुखेन ग्रहणस्य कार्यस्य वैपरीत्यं प्रतीयते। विपरीतप्रतीत्येति। यदि कृपाणी नीला तत् कथं धवलं यशो जनयतीति कार्यस्य धवलत्वलक्षणवैपरीत्यप्रतीत्या कारणगतस्य नीलत्वस्य प्रतिषेधस्तस्य विषमालङ्कारस्य विषयः। किञ्चात्र विचित्रे कस्यचिद् यत्नाद् विपरीतोत्पत्तिः, विषमे स्वत एवेत्यपि भेदो द्रष्टव्यः। घेत्तुमित्यादि।

ग्रहीतुं मुच्यतेऽधरोऽन्यतो वलति प्रेक्षितुं दृष्टिः।
घटितुं विघटेते भुजौ रताय सुरतेषु विश्रमः॥

**अत्र मोचनेति**। मोचनादीनां हेतूनामग्रहणादिफलविपरीतानि ग्रहणा-

---

१. 'द्गु यशश्त्रिलोकाभरणं प्रसूते इत्यत्र। दह', २. 'णां प्र', ३. 'तफ' क. ख. पाठः. ४. 'मिद्धपुर' ग. पाठः.

यथा वा—

"उन्नत्यै नमति प्रभुं प्रभुगृहान् द्रष्टुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति जडधीरागामिवित्ताशया ।
प्राणान् प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया
सर्वं तद् विपरीतमेव कुरुते तृष्णान्धदृक् सेवकः ॥"

अत्र विपरीतफलनिष्पादनप्रयत्नः सुज्ञानः ॥

**आश्रयाश्रयिणोरनानुरूप्यमधिकम् ॥ ४८ ॥**

विरोधप्रस्तावादिह निर्देशः । अनानुरूप्यस्य विरोधोत्थापकत्वात् । तच्चानानुरूप्यमाश्रयस्य वैपुल्येऽप्याश्रितस्य परिमितत्वाद् वा आश्रितस्य वैपुल्येऽप्याश्रयस्य परिमितत्वाद्

---

दीनि कान्तप्रयत्नविषयत्वेनोपनिबद्धानि । उन्नत्यै इत्यादि । पूर्वत्र वैपरीत्यमुन्नेयम्, अत्र तु विपरीतमेव कुरुत इति शब्दोपात्तम् । तदेवाह— **अत्र विपरीतेति** । क्वचिद् विपरीतफलनिष्पत्त्यर्थं यत्न आरोपितो भवति । यथा—

सन्नद्धे त्वयि सम्प्रहारविधये संवर्तवैश्वानर-
ज्वालाचण्डिमदर्पभञ्जनकलादक्षप्रतापोष्मणि ।
आरोहन्त्यवरोढुमेव तुरगान् हातुं च गृह्णन्त्यसी-
नागच्छन्त्यपयातुमाहवमहो सङ्ग्रामधीर! द्विपः ॥

अत्र तुरगारोहणादीनि तुरगावस्थानादिफलानि विपरीतावरोहणादिफलत्वेनोपनिबद्धानि । तत्र च यत्नाभावेऽपि तत्फलदर्शनाद् यत्नः शत्रुष्वारोपितः । क्वचिच्छ्लेषावष्टम्भेनापि दृश्यते ।

प्रतिभटभणः पुरस्ते तिष्ठति सरुपः पुरः स्थितिं हातुम् ।
अधिकचलेन यदुदह! विग्रहमुक्त्यै त्वया विगृह्णाति ॥

आश्रयाश्रयिणोरन्यूनानतिरिक्तत्वमानुरूप्यम् । तदभावोऽनानुरूप्यम् । तत्र प्रथमे भेदे आश्रयस्यातिरिक्तत्वमाश्रयिणो न्यूनत्वं, द्वितीये त्वन्यथा ।

वा स्यात् । क्रमेण यथा—

"द्यौरत्र क्वचिदाश्रिता प्रवितत पातालमत्र क्वचित्
क्वाप्यत्रैव धराधराधरजलाधारावलिर्वर्तते ।
स्फीतस्फीतमहो नभः कियदिदं यस्येत्थमेवंविधै-
र्दूरे पूरणमस्तु शून्यमिति यन्नामापि नास्तं गतम् ॥"

"दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
ष्टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसम्पुटलसद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति॥"

पूर्वत्र नभस आश्रयस्य वैपुल्येऽप्याश्रितानां द्युप्रभृतीनां पारिमित्यं चारुत्वहेतुः । उत्तरत्र तु टङ्कारध्वनेराश्रितस्य महत्त्वेऽपि ब्रह्माण्डस्याश्रयस्य स्तोकत्वम् ॥

**परस्परं क्रियाजननेऽन्योन्यम् ॥ ४९ ॥**

इहापि विरोधप्रस्ताव एव निर्देशकारणम् । परस्पर-

---

**द्यौरिति ।** अत्रेत्यादि । इहात्रेति शब्दैस्त्रिभिर्नभः परामृश्यते । स्वर्गादीनामेकदेशवृत्तित्वादवगतेन नभसः स्फीत्यतिशयेनोपजनितमहो इति वाचिकानुभावसूचितं विस्मयं कियदिदमित्यादिना क्षिपति । यस्य नभस इत्थमवस्थितैः एवंविधैर्महद्भिरपि स्वर्गादिभिः पूरण दूरे अस्तु मा भवत्वित्यर्थः । यच्छून्यमिति नाम, तदपि नास्त गतमित्यन्वयः । अयमर्थः—एत महान्तः स्वर्गादयो नभसो वैपुल्यातिशयात् पूरण मा कुर्वत । एतदभ्युपगच्छामः । एष्वन्तर्वर्तिष्वप्यवासस्त्विवान्तर्गतपदार्थराहित्यलक्षणं शून्यत्वं यस्यानुवर्तते, तस्य नभस एषां क्वाचित्कत्वेन स्फीत्यतिशयवर्णनं कीदृगिति ॥

**विरोधप्रस्ताव एवेति ।** एकस्यैकां क्रियां प्रति कर्मकर्तृत्वयो-

---

१. 'स्याद् य' क ख पाठः २ 'दलव' क. पाठः. ३ 'ण' ख पाठ .

जननस्य विरुद्धत्वात्। क्रियाद्वारकं यत्र परस्परोत्पादकत्वं, न स्वरूपनिबन्धनं, स्वरूपस्य तथात्वोक्तिविरोधात्, तत्रान्योन्याख्योऽलङ्कारः। यथा—

"कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य।
अन्योन्यशोभाजननाद् बभूव
साधारणो भूषणभूष्यभावः॥"

अत्र शोभाख्यक्रियामुखकं परस्परजननम्॥

**अनाधारमाधेयमेकमनेकगोचरमशक्यवस्त्वन्तरकरणं च विशेषः॥ ५०॥**

इहाधारमन्तरेणाधेयं न वर्तत इति स्थितावपि यत्तत्परिहारेणाधेयस्योपनिबन्धः, स एको विशेषः। यच्चैकं वस्तु परिमितं युगपदनेकत्र वर्तमानं क्रियते, स द्वितीयो विशेषः। यच्च किञ्चिदारभमाणस्यासम्भाव्यवस्त्वन्तरकरणं, स तृतीयो

विरोधात्। क्रियाद्वारकमित्यादिना विरोधसमाधिं दर्शयति। एकस्यैव जन्यत्वे जनकत्वे च विरोधः, इह तु भूषणादिक्रियाया जन्यत्वं कण्ठमुक्ताकलापयोर्जनकत्वमिति न विरोधः। क्रियागतजन्यत्वं कण्ठहारनिष्ठत्वेन प्रतीयत इत्यामुखे विरोधस्फुरणम्। तथात्वोक्तिविरोधादिति। एकस्य कार्यत्वकारणत्वयोर्विरोधस्य दुष्परिहरत्वात्॥

असम्भविनः सम्भवित्वेन निबन्धो विशेष इति सामान्यलक्षणं भेददर्शनवशादुक्तुं शक्यमित्यभिसन्धाय भेदानेव दर्शयति—**अनाधारमित्यादिना**। नभःप्रभृतेर्विभुद्रव्यस्य युगपदनेकत्रोपलम्भे सत्यपि न वैचित्र्यमित्यत आह—**परिमितमिति**। *इह अधिकादिप्रस्तावे।

१. 'स' ग पाठः. २. 'ऽ' क. पाठः.

* इहानुरूप्यपरिहारस्वविरोधप्रस्तावादुक्तिः' इति मूलपाठं मन्यते व्याख्या।

विशेषः । आनुरूप्यपरिहाररूपविरोधप्रस्तावादिहोक्तिः । क्रमेण यथा—

"दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥"

"प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा
पर्यङ्के सा दिशि दिशि च सा तद्वियोगाकुलस्य ।
हंहो चेतःप्रमितिरपरा नास्ति ते कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥"

"निमेषमपि यद्येकं क्षीणदोषे करिष्यसि ।
पदं चित्ते तदा शम्भो! किं न सम्पादयिष्यसि ॥"

अत्र कवीनामाधाराणामभावेऽप्याधेयानां गिरामवस्थितिरनन्यत्रभावो विषयार्थ इति विषयत्वेन तेषामाधारत्वात् । एकस्या एव योषितः प्रासादादौ युगपदवस्थानं, चित्तविषये पदकरणे प्रस्तुतेऽपि भावि लोकोत्तरवस्तुसम्पादनं क्रमेण ज्ञेयम् ।

आनुरूप्येति । आधेयस्य सत आधारमन्तरेणावस्थानात्, परिमितस्यानेकदेशव्यापित्वात्, कार्यान्तरप्रवृत्तेन कार्यान्तरस्यापि करणादानुरूप्यस्य परिहारः । कवीनामाधाराणामिति । यद्यप्याकाशाधारा गिरस्तथापि ताः प्रति कवीनां वैषयिकाधारत्वमस्त्येवेत्याह— अनन्यत्रभाव इति । यथा गगने विहगश्चरतीत्यत्र विहगचरणस्यानन्यत्रभावाद् गगनं वैषयिकमधिकरणं, तथा कविभ्योऽन्यत्राभावाद् गिरोऽपि तद्विषयत्वेन तदाधारा इत्युच्यन्ते । भावीत्यादि । लब्धयोगान्निर्वाणप्राप्तिलक्षणेलोकोत्तरंवस्तुसम्पादनं भावि ॥

१. 'रगं गु', २. 'लाश्रया ये', ३. 'स्निग', ४. 'भावः ॥', ५. 'म्भावयि', ६. 'नं' ष ग पाठः. ७. 'द', ८. 'ष' क. पाठः. ९. 'पं', १०. रग' ग. पाठः.

**यथा साधितस्य तथैवान्येनान्यथाकरणं व्याघातः ॥ ५१ ॥**

कश्चिदुपायविशेषमवलम्ब्य केनचिद् यन्निष्पादितं वस्तु, तत् ततो[2]ऽन्येन केनचित् तत्प्रतिद्वन्द्विना तेनैवोपायविशेषेण यदन्यथा[3] क्रियते, स निष्पादितवस्तुव्याहतिहेतुत्वाद् व्याघातः । यथा —

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे[5] वामलोचनाः ॥"

अत्र दृष्टिलक्षणेनोपायेन स्मरस्य हरेण दाहविषयत्वं निष्पादितम् । मृगनयनाभिः पुनस्तेनैवोपायेन तस्य जीवनविषयत्वं क्रियते । तच्च दाहविषयत्वस्य प्रतिपक्षभूतम् । तेन व्याघाताख्योऽयमलङ्कारः । सोऽपि व्यतिरेकनिमित्तत्वेनात्रोक्तः । विरूपाक्षस्येति चारुलोचना इति च व्यतिरेकगर्भावेव वाचकौ । जयिनीरिति व्यतिरेकोक्तिः । पूर्ववदिह प्रकरणे लक्षणम् ॥

सूत्रे यथातथोपादानादवगतमुपायैक्यमन्येनेत्यनेनावसितं साधयित्रोर्भेदमन्यथेत्यनेन लब्धं तयोर्विरोधं च दर्शयति— कश्चिदित्यादिना । सोऽपीति । सः व्याघातः । व्यतिरेकनिमित्तत्वेनेति । हरादुपमानादुपमेयानां चारुलोचनानामाधिक्यलक्षणस्य व्यतिरेकस्यानुग्राहकत्वेन । व्यतिरेकगर्भावेवेति । उपमाननिकर्षोपमेयोत्कर्षनिमित्तवैरूप्यदृक्चारुत्वलक्षणार्थगर्भावित्यर्थः । पूर्ववदिति । विशेषवद्, विरोधप्रस्तावादित्यर्थः ॥

१. 'धी'. २. 'तेनान्ये', ३ 'चिद् प्र', ४. 'धी' क ग पाठः. ५ 'म.' ख पाठ ६ 'न जी' क ग पाठः. ७. 'रं' व्याख्यापाठ. ८. 'पयप्र' ग. पाठ.

प्रकारान्तरेणाप्ययं भवतीत्याह —

**सौकर्येण कार्यविरुद्धक्रिया च ॥ ५२ ॥**

व्याघात इत्येव । किञ्चित् कार्यं निष्पादयितुं सम्भाव्यमानः कारणविशेषस्तत्कार्यविरुद्धनिष्पादकत्वेन यत् समर्थ्यते, सोऽपि सम्भाव्यमानकार्यव्याहतिनिबन्धनत्वाद् व्याघातः । कार्यविरुद्धकार्यनिष्पत्तिश्च कार्यापेक्षया सुकरा । तस्य कारणस्यात्यन्तं तदानुगुण्यात् । न त्वत्र कार्याभिमतस्य कार्यत्वाभावः । तद्विरुद्धस्यात्र सौकर्येण कार्यत्वात् । अत एव द्वितीयाद् विषमाद् भेदः । तत्र हि कार्यस्यानुत्पत्तिरनर्थस्य चोद्गमनम् । इह तु कार्यं सुखकार्यं न भवति । तद्विरुद्धस्यानर्थव्यतिरेकिणोऽप्यत्र सुष्ठुकार्यत्वात् । उदाहरणं —

---

**प्रकारान्तरेणेति** । पूर्वत्र निष्पन्नस्य कार्यस्य तद्विरुद्धजननादन्यथाकरणम् । इह तु कार्यविशेषनिष्पादकतया सम्भावितस्य कारणस्य तद्विरुद्धकार्यनिष्पादकत्वेन समर्थनादन्यथाकरणमित्यस्य प्रकारान्तरता । अत एव तद्भेदकत्वेनावचनम् । नामसाम्यं तु व्याहतिहेतुत्वलक्षणस्य निर्वचनस्य साधारण्यात् । **सौकर्येणेत्यादि** । समर्थ्यमानेति शेषः । कार्यत्वेन सम्भावितस्य विरुद्धं यत् कार्यं, तस्य सौकर्येण हेतुना निष्पत्तिसमर्थनमिति सूत्रार्थः । चशब्देन व्याघात इत्येतदनुकृष्यत इत्याह — **व्याघात इत्येवेति** । **अत्यन्तं तदानुगुण्यादिति** । सम्भाव्यमानकार्यापेक्षया विरुद्धकार्यं प्रति निष्पादकत्वस्य स्फुटतया प्रतिभासादित्यर्थः । नन्वेवं विरुद्धकार्योत्पत्तिरविशिष्टेत्यनर्थोत्पत्तिलक्षणाद् विषमभेदादस्य को भेद इत्याशङ्क्याह — **अत एवेत्यादि** । अत्रातश्शब्देन न त्वत्रेत्यादिना प्रतिपादितः अस्मिन् व्याघाते कार्याभिमतस्यापीति कार्यत्वं तद्विरुद्धस्यापि,

---

१. 'द्वपरिनि' क. ख. पाठः. २. 'र्योनु', ३. 'स्यागम', ४. 'र्थे वा', ५. 'पि सु', ६. 'त् । यथा—इ' ख पाठ

हर्षचरिते राज्यवर्धनं प्रति श्रीहर्षोक्तिषु—"यदि बाल इति, सुतरामपरित्याज्योऽस्मि । रक्षणीय इति, भवद्भुजपञ्जरमेव रक्षास्थानम्" इत्यादि । अत्र राज्यवर्धनस्य श्रीहर्षप्रस्थापने कार्ये बाल्यरक्षणीयत्वादि कारणत्वेन यत् सम्भावितं, तत् प्रत्युताप्रस्थापनलक्षणस्य विरुद्धस्य कारणत्वेन सुकरतया समर्थितमिति व्याघातोऽलङ्कारः ॥

एवं विरोधमूलानलङ्कारान् निर्णीय शृङ्खलाबन्धेन विचित्रिता अलङ्कारा लक्ष्यन्ते । तत्र —

**पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला ॥ ५३ ॥**

यदा पूर्वं पूर्वं क्रमेणोत्तरमुत्तरं प्रति हेतुत्वं भजते, तदा कारणमालाख्योऽयमलङ्कारः । यथा —

"जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणप्रकर्षेण जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥"

---

विरुद्धेषु पुनः सौकर्यमतिरिच्यत इत्येतावदित्येवंरूपोऽर्थः परामृश्यते । भेदमेवोपपादयति — तत्रेति । विषमे कारणस्याभिमतकार्यानुत्पादकत्वमुत्पाद्यमानस्यानर्थत्वं च नियमेनापेक्षितम् । व्याघाते द्वे अपि कार्ये उत्पाद्ये । उत्तरकार्यस्यानर्थत्वं च न विवक्षितम् । सौकर्यमेव विवक्षितमित्यर्थः । तत् प्रत्युतेति । (तद्) बाल्यरक्षणीयत्वादि ॥

शृङ्खलाबन्धो नाम शृङ्खलावदुत्तरोत्तरग्रथितत्वेन निबन्धः । कारणमालेति । मालावद् बहूनां कारणानां ग्रथितत्वात् । इन्द्रिय(स्य?)

---

१. 'ज्यः । र', २ 'र र', ३. 'र्धस्य सु' ग. पाठः, ४. 'माल', ५. 'ख्योऽल' क. ख. पाठ. ६ 'पु तु र्गां' ग. पाठ ७. 'त्र दीति' क. ग. पाठः. ८. 'गुणपाद' क. पाठः.

कार्यकारणक्रम एवात्र चारुत्वहेतुः ॥

यथापूर्वं परस्य विशेषणतया स्थापनेऽपोहने वैकावली[2] ॥ ५४ ॥

यत्र पूर्वं पूर्वं प्रति क्रमेण परं परं विशेषणत्वमनुभवति, स एकावल्यलङ्कारः। विशेषणत्वं च स्थापनेन निवर्तनेन वा। स्थापनेन यथा—

"गृहाणि यस्यां सवराङ्गनानि
वराङ्गना रूपपुरस्कृताङ्ग्यः।
रूपं समुन्मीलितसद्विलास-
मस्त्रं विलासाः कुसुमायुधस्य॥"

अत्र वराङ्गना गृहाणां विशेषणं स्थापनीयत्वेन स्थितम्। एवं वराङ्गनानां रूपमित्यादि ज्ञेयम्। निवर्तनेन यथा—

"न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद् यदलीनपट्पदम्।
न पट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः॥"

अत्र जलस्य सुचारुपङ्कजत्वं विशेषणं निषेध्यत्वेन निबद्धम्। एवं पङ्कजादीनामलीनपट्पदत्वादि ज्ञेयम्॥

---

जयस्य विनयादीनशेषान् प्रति कारणत्वं विवक्षितम्। तच्च तथा निर्दिष्टं न चारुतामावहतीति क्रमस्य स्वीकारः॥

सूत्रे यथापूर्वमित्यत्र वीप्साया दर्शितत्वात् परस्येत्यत्रापि सा द्रष्टव्येत्याह—परं परमिति। स्थापनेन निवर्तनेन वेति। विधिमुखेन निषेधमुखेन वेत्यर्थः॥

---

१. 'ना', २. 'ए' क. ख. पाठः.

**पूर्वपूर्वस्योत्तरोत्तरगुणावहत्वे मालादीपकम् ॥ ५५ ॥**

उत्तरोत्तरस्य पूर्वं पूर्वं प्रत्युत्कर्षहेतुत्वे एकावली । पूर्वपूर्वस्य[1] तूत्तरोत्तरं प्रत्युत्कर्षनिबन्धनत्वे मालादीपकम् । मालात्वेन चारुत्व[2]विशेषमाश्रित्य दीपकप्रस्तावोल्लङ्घनेनेह लक्षणं कृतम् । गुणावहत्वमुत्कर्षहेतुत्वम् । यथा —

"सङ्ग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते
संप्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादि[3]ताः ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं नृपते! त्वया सितयशस्तेनापि लोकत्रयम् ॥"

अत्र कोदण्डादिभिः क्रमेण शरादीनामुत्कर्षो[4]ऽभिहितः । समासादनक्रियालक्षणनिबन्धनं च दीपकं दीपनविषयाणामुत्तरोत्तराभिमतत्वेन कृतम् ॥

---

एकावल्या वैपरीत्यलक्षणः सम्बन्धो मालादीपकस्य तदनन्तरलक्षणे हेतुरित्याह — उत्तरोत्तरस्येत्यादि । कोदण्डादीत्यादिशब्देन शरादयो गृह्यन्ते, शरादीत्यादिशब्देनारिशिरःप्रभृतयः । कोदण्डादिहेतुकः शरादीनां कोदण्डादिकर्तृकासादनकर्मत्वलक्षण उत्कर्षः कविनाभिहित इत्यर्थः । उत्कृष्टं हि लोके आसादनीयं भवति । यद्वा, अरिशिरःप्राप्त्यादिलक्षणः शरादीनामुत्कर्षः । तस्य च कोदण्डाद्यासादितत्वमन्तरेणाभावात् कोदण्डादिहेतुत्वम् । विहित इति पाठे कोदण्डादिभिरिति कर्तरि तृतीया । समासादनक्रियालक्षणनिबन्धनमिति । समासादनक्रियारूपं निबन्धनं समानधर्मो यस्य तत्तथा । दीपनविषयाणां शरादीनां कर्मणाम् । उत्तरोत्तराभिमतत्वेनेति । यथोत्तरमुत्कृष्टत्वेन । तद्यथा कोदण्डकर्तृकात् शरैसमासादनात् शर-

---

१. 'र्वस्य तू', २. 'त्वोत्त', ३. 'ताः' क. ख. पाठ. ४. 'तम्' क. पाठ. ५ 'नत्व', ६. 'रामा' ख. पाठ

**उत्तरोत्तरमुत्कर्षः सारः ॥ ५६ ॥**

पूर्वपूर्वापेक्षयोत्तरोत्तरस्योत्कृष्टत्वनिबन्धनं सारः। यथा—

"राज्ये सारं वसुधा वसुन्धरायां पुरे पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम्॥"

अत्र राज्यापेक्षया वसुधायाः सारत्वं, वसुधापेक्षया पुरस्य। एवं पुरापेक्षया तदेकदेशस्य गृहस्येत्यादि योजनीयम्॥

एवं शृङ्खलावृत्त्यालङ्काराः प्रतिपादिताः। अधुना तर्कन्यायाश्रयेणालङ्कारद्वयमुच्यते[2]। तत्र—

**हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम् ॥ ५७ ॥**

यत्र हेतुः कारणरूपो वाक्यार्थगत्या विशेषणद्वारेण वा पदार्थगत्या लिङ्गत्वेन निबध्यते, तत् काव्यलिङ्गम्। तर्क-

---

कर्तृकमरिशिरःसमासादनमुत्कृष्टं, ततोऽप्यरिशिरःकर्तृकं भूमण्डलसमासादनम्, एवमन्यत्रापि। अथवा, उत्तरोत्तरस्य शरारिशिरःप्रभृतेररिशिरोभूमण्डलादिप्राप्तिहेतुत्वेन पूर्वपूर्वकोदण्डशरादिकर्तृकं समासादनमभिमतमपेक्षितमित्यर्थः॥

पूर्वपूर्वापेक्षयेति। पूर्वपूर्वमवधीकृत्येत्यर्थः। गृहस्येत्यनेन सौधं निर्दिश्यते। योजनीयमिति। सौधापेक्षया तदेकदेशवर्ति तल्पं, तल्पापेक्षया तदेकदेशवर्तिन्यनङ्गसर्वस्वभूता वराङ्गना च सारमित्यर्थः॥

तर्कन्यायाश्रयेणेति। केनचिद्धेतुना कस्यचिदर्थस्य प्रतीतिस्तर्कन्यायः। तत्र प्रत्यायकस्य साधनत्वमर्थसामर्थ्यलभ्यं शब्दप्रतिपन्नं चेति द्वयी गतिः। तत्राद्ये प्रकारे काव्यलिङ्गं, द्वितीये त्वनुमानम्। कारणरूप इत्यादि। वाक्यार्थगत्या वाक्यार्थवृत्तित्वेन प्रतिपन्नो वाक्यार्थो वाक्यार्थान्तरं प्रति लिङ्गत्वेन निबद्ध इत्यर्थः। विशेषणद्वारेण चेति। विशेषणभूतपदार्थ-

---

१. 'त्कर्षनि', २. 'ते। हे' क. ख. पाठः. ३. 'त्वात्' ख. पाठः. ४. 'न कारणरूपत्वेन प्र' क. पाठः.

वैलक्षण्यार्थं काव्यग्रहणम् । नह्यत्र व्याप्तिपक्षधर्मतोपसंहारादयः क्रियन्ते । वाक्यार्थगतया च निबध्यमानो हेतुत्वेनैवोपनिबन्धव्यः, नोपनिबद्धस्य हेतुत्वम् । अन्यथार्थान्तरन्यासान्नास्य भेदः स्यात् । क्रमेणोदाहरणं—

"यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारः शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥"

"मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा-
स्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्या-
मुत्पक्ष्मराजीनि विलोचनानि ॥"

पूर्वत्र पादत्रयार्थोऽनेकवाक्यार्थरूपश्चतुर्थपादार्थे हेतुत्वेनोपन्यस्तः । उत्तरत्र तु सम्बोधने व्यापारयन्त्य इति मृगीवि-

घृत्तित्वेन साध्यं प्रति विशेषणतया आर्थहेतुतया लिङ्गभूतः पदार्थो निबध्यते, न तु तृतीयापञ्चम्यन्ततया शाब्दहेतुतया । तर्कवैलक्षण्यमुपपादयति—नह्यत्रेति । क्रियन्त इति । शब्देन न प्रतिपाद्यन्ते, अर्थसामर्थ्यादवसीयन्त इत्यर्थः । हेतुत्वेनैवेति । यथा उपक्रम एव साध्यसाकाङ्क्षतया प्रतीयमानो हेतुत्वेनैव प्रतीयते तथोपनिबन्धनीयः । नोपनिबद्धस्येति । यथा आमुखे नैराकाङ्क्ष्यप्रतिभासादप्रतीतं पश्चात् पर्यालोचनया प्रतीयते, न तथा कर्तव्यमित्यर्थः । पूर्वत्रेति । यत्त्वन्नेत्रेत्यादौ । अत्र दैवे धर्मिण्यस्मदर्थसम्बन्धिप्रियतमासादृश्यविनोदाक्षमत्वं धर्मः साध्यः, तत्र प्रियतमावयवसदृशानामिन्दीवरादीनां मज्जनादिक्रिया हेतुः । सा च क्रिया दैवे धर्मिणि कर्तृभूतेऽवतिष्ठत इति पक्षधर्मता । यः सदृशद्रव्याणि तिरस्करोति, स साद-

१. 'र्भोप', २. 'दो भवेत् ।'. ३. 'न यथा — च, ४. 'ते', ५. 'दा',
६. 'यत्ततस्ते', ७. 'र्थ', ८. 'त्र च' क. ख. पाठः. ९. 'अ' ख. पाठः.

शेषणत्वेनानेकपदार्थो हेतुरुक्तः । एवमेकवाक्यार्थपदार्थ[१]गतत्वेन काव्यलिङ्गमुदाह्रियते । यथा—

"मनीषिताः सन्ति गृहेषु देवता-
स्तपः क्व वत्से! क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्रिणः ॥"

"यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्सन्निधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव क्वथमानमास्ते ॥"

पूर्वत्र वरप्राप्तिहेतुभूततपोनिषेधे मनीषिता इति वाक्यार्थभूतो हेतुर्निर्दिष्टः । उत्तरत्र पुनरस्तमितान्यभावमित्यत्र विस्मयस्तिमितमिति विशेषण[२]द्वारेण पदार्थः ॥

---

श्यविनोदाक्षमः । यथा कश्चिद् द्वेष्यजनस्येति व्याप्तिप्रदर्शनम् । दैवं च सदृशानीन्दीवरादीनि तिरस्करोतीत्युपसंहारः । तस्मात् सादृश्यविनोदाक्षममिति निगमनमित्येतत्सर्वमर्थसामर्थ्यादवसीयते, न तु शब्दत इति तर्कवैलक्षण्यम् । अनेकपदा[३]र्थ इति । व्यापारयन्त्यो दिशीत्यादिपदपञ्चकप्रतिपादितं मृगीलक्षणधर्मिगतत्वेन संबोधनप्रयोजकत्वं साध्यं, तत्र हेतुर्विशिष्टलोचनव्यापारणं, तस्य च कर्तृभूतासु मृगीषु वृत्तेः पक्षधर्मत्वमस्त्येव । संबोधनविलोचनव्यापरणयोः साध्यसाधनयोर्व्याप्तिरदेशिकसंबोधयितरि देशिके सुग्रहैवेति व्याप्त्यादयः पूर्ववदार्थाः, न तु शाब्दा इति तर्कवैलक्षण्यम् । पूर्वत्रेत्यादि । तपः क्व वत्से! क्व च तावकं वपुरिति प्रतिपादितस्य पार्वतीलक्षणधर्मिगतस्य तपोनिषेधविषयत्वात्मनः साध्यस्य निजगृहसन्निहिताभिमतदेवताकत्वं मनीषिताः सन्ति गृहेषु देवता इत्येकवाक्यार्थात्मकं साधनम् । तयोश्च व्याप्त्यादयः पूर्ववद् द्रष्टव्याः ॥

---

१ 'र्थ' २ 'कृपो हे' ३ '[illegible]' क. ख. पाठः

## साध्यसाधननिर्देशोऽनुमानम् ॥ ५८ ॥

यत्र शब्दवृत्तेन पक्षधर्मतान्वयव्यतिरेकवत् साधनं साध्यप्रतीतये निर्दिश्यते, सोऽनुमानालङ्कारः। विच्छित्तिविशेषश्चात्रार्थादाश्रयणीयः। अन्यथा तर्कानुमानात् किं वैलक्षण्यम्। उदाहरणं —

"यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः।
यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुषण्डे स्मरदवः ॥"

अत्र धूमस्फुलिङ्गकपिलदिक्त्वानि वह्निलिङ्गानि त्रिरूपत्वाद् दवशब्दप्रतिपादितं वह्निं गमयन्तीत्यनुमानम्। रूपकमूलत्वेनालङ्कारान्तरगर्भीकारेण विच्छित्त्याश्रयणात् तर्कानुमानवैलक्षण्यम्। क्वचित्तु शुद्धमपि भवति। यथा —

"यत्रैता लहरीचलां चलदृशो व्यापारयन्ति भ्रुवं
यत् तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥"

पक्षधर्मेत्यादि। पक्षधर्मता च सिसाधयिषितधर्मविशिष्टे धर्मिणि वृत्तिः। अन्वयः स्वान्वये साध्यान्वयः। व्यतिरेकः साध्यव्यतिरेके स्वव्यतिरेकः। एतन्नितयवत्। अर्थादिति। काव्यशोभाकरत्वेनालङ्कारत्वसंभवात्। अन्यथा विच्छित्तिविशेषानाश्रयणे। त्रिरूपत्वादिति। पक्षधर्मत्वं, सपक्षे सत्त्वं, विपक्षाद् व्यावृत्तिरिति त्रीणि रूपाणि। जलदधूम इत्यादिरूपकवशादुत्थितत्वेनानुमानस्य तन्मूलत्वम्। शुद्धम् अलङ्कारान्तरासङ्की-

१. 'ण्यम्। यथा — य', २. 'सहित', ३. 'त' क. ख. पाठः.

अत्र योषितां भ्रूव्यापारेण मार्गणपतनं स्मरपुरोगामित्वे साध्येऽनलङ्कृतमेव साधनमिति शुद्धमनुमानम् । प्रौढोक्तिमात्रनिष्पन्नार्थनिष्ठत्वेन[1] च विच्छित्तिविशेषाश्रयणाच्चारुत्वम् । अयमत्र पिण्डार्थः — इहास्ति प्रत्याय्यप्रत्यायकभावः । अस्ति च समर्थ्यसमर्थकभावः । तत्राप्रतीतप्रत्यायने प्रत्याय्यप्रत्यायकभावः । प्रतीतसमर्थने तु समर्थ्यसमर्थकभावः । तत्र प्रत्याय्यप्रत्यायकभावेऽनुमानम् । समर्थ्यसमर्थकभावे तु यत्र पदार्थो हेतुस्तत्र हेतुत्वेनोपादाने

"नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात् कदलीविशेषाः"

इत्यादाविव न कश्चिदलङ्कारः । यत्र तूपात्तस्य हेतुत्वं यथोदाहृते विषये 'मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षाः' इत्यादौ, तत्रैव काव्यलिङ्गम् । यत्र तु वाक्यार्थस्य हेतुत्वं, तत्र हेतुत्वप्रति-

---

र्णम् । **स्मरपुरोगामित्वे** इति । योषितां पुरः स्मरगमन इत्यर्थः । ननु यद्यत्रालङ्कारान्तरस्यानवतरः, तत् कथं तर्कानुमानवैलक्षण्यमत आह — **प्रौढोक्तीति** । योषिद्भ्रूव्यापारविषयीकृतस्य रागो वर्धत इत्येतावदेव लोके सम्भवति, न तु स्मरमार्गणपतनम्, अदृष्टत्वात् । एवमेव कुण्डलितकोदण्डस्य स्मरस्य धावनमप्यसम्भवि । अतः साध्यसाधनयोरुभयोरपि कविनिबद्धस्य प्रतिभामात्रनिर्वृत्तत्वात् प्रौढोक्तिमात्रनिष्पन्नत्वम् । अर्थान्तरन्यासकाव्यलिङ्गानुमानानां हेतुहेतुमद्भावावलम्बनेन प्रवृत्तावविशिष्टायामपि विशेषं दर्शयितुमाह — **अयमत्रेति** । प्रत्याय्यप्रत्यायकसमर्थ्यसमर्थकभावयोः[2] प्रत्याय्यं समर्थ्यं च हेतुमत्, प्रत्यायकः समर्थकश्च हेतुः । अप्रतीतप्रतीतविषयत्वेन प्रत्यायनसमर्थनयोर्भेदात् प्रत्याय्यप्रत्यायकसमर्थ्यसमर्थकभावयोर्भेदः । उपात्तस्य विशेषणद्वारा मृग्यश्चेत्यादौ व्यापारयन्त्य

---

१. 'न वि' क. ख. पाठः. २. 'योर्भेदः ।' ख. ग. पाठः.

पादकमन्तरेण हेतुत्वेनोपन्यासे[१] काव्यलिङ्गमेव । तटस्थत्वे नोपन्यस्तस्य[२] तु हेतुत्वेऽर्थान्तरन्यासः । एवञ्चास्यां प्रक्रियायां कार्यकारणयोर्वाक्यार्थयोर्हेतुत्वे[३] काव्यलिङ्गमेव पर्यवस्यति । समर्थ्यवाक्यार्थस्य सापेक्षत्वात् ताटस्थ्याभावात् । ततश्च सामान्यविशेषभाव एवार्थान्तरन्यासस्य विषयः । यत् पुनरर्थान्तरन्यासस्य कार्यकारणगतत्वेन समर्थकत्वमुक्तं, तदुक्तलक्षणं काव्यलिङ्गमनाश्रित्य, तद्विषयत्वेन लक्षणान्तरस्यौद्भटैराश्रितत्वात् । उक्तलक्षणाश्रयणे तु 'यत्त्वन्नेत्रे'ति विविक्तो विषयः काव्यलिङ्गस्यार्थान्तरन्यासाद् दर्शित इति कार्यकारणयोः समर्थ्यसमर्थकत्वमर्थान्तरन्यासे पूर्वं दर्शितमितीयं गमनिकाश्रयितव्या[४] ॥

एवं तर्कन्यायमूलमलङ्कारद्वयमिह[५] प्रतिपादितम् । अधुना वाक्यन्यायमूला अलङ्कारा उच्यन्ते । तत्र —

---

इत्यस्य । तत्रैवेत्येवकारेण हेतुत्वेनोपादानं व्यवच्छिनत्ति । हेतुत्वेनोपन्यासे सापेक्षत्वेन निर्देशे । तटस्थत्वेन निरपेक्षत्वेन । एवञ्चेति । काव्यलिङ्गार्थान्तरन्यासयोर्व्यवस्थितविषयत्वे । कार्यकारणेति । 'सहसा विदधीत'-त्यादौ 'पृथ्वि! स्थिरीभवे'त्यादौ च । उक्तलक्षणं 'हेतोर्वाक्यपदार्थत्वे' इत्येवंरूपम् । तद्विषयत्वेन काव्यलिङ्गविषयत्वेन । लक्षणान्तरस्य प्रत्याय्यप्रत्यायकभावविषयहेतुत्वात्मनः । यदुक्तं —

"श्रुतमेकं यदन्यत्र स्मृतेरनुभवस्य वा ।
हेतुतां प्रतिपद्येत काव्यलिङ्गं तदुच्यते ॥"

इति । विविक्तो विषय इति । कार्यकारणभावप्रतीतिशून्यो ज्ञाप्यज्ञापकभावमात्रोपलक्षितः ॥

वाक्यन्यायो मीमांसान्यायः । ऊर्ध्वं निर्दिष्टाः प्रथमं निर्दिष्टा

---

१ 'तयोप', २. 'स्य हे', ३. 'णवाक्या', ४. 'यणीया ॥', ५. 'य प्र' क ख. पाठः. ६. 'त्तरल' क. पाठः.

**उद्दिष्टानामर्थानां क्रमेणानुनिर्देशो यथासंख्यम्॥ ५९॥**

ऊर्ध्वं निर्दिष्टा उद्दिष्टाः। पश्चान्निर्देशोऽनुनिर्देशः। स चार्थादर्थान्तरगतः। सम्बन्धश्चात्र सामर्थ्यात् प्रतीयते। ऊर्ध्वं निर्दिष्टानामर्थानां पश्चान्निर्दिष्टैरर्थैः क्रमेण सम्बन्धे यथासङ्ख्यमिति वाक्यार्थः। अन्ये त्विममलङ्कारं क्रमसंज्ञयाभिदधिरे। तच्च यथासंख्यं शाब्दमार्थं चेति द्विधा। शाब्दं यत्रासमस्तानां पदानामसमस्तैरेव पदैरर्थद्वारकः सम्बन्धः, तत्र, क्रमसम्बन्धस्यातिरोहितस्य प्रत्येयत्वात्। आर्थं तु यत्र समासः क्रियते, तत्र, समुदायस्य समुदायेन सह सम्बन्धस्य शाब्दत्वाद्, अर्थानुगुण्यपर्यालोचनेन त्ववयवगतः क्रमसम्बन्धः प्रतीयते। ततोऽत्र यथासंख्यस्यार्थत्वम्। आद्यस्योदाहरणं—

"लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।

---

इत्यर्थः। **अर्थादिति**। प्रथमनिर्दिष्टानामेव पश्चान्निर्देशे पौनरुक्त्यप्रसङ्गात्। अनुनिर्देशो नामैकैकस्मिन् पदार्थे एकैकसंसर्गख्यापनम्। **सम्बन्धश्चेति**। प्रथमनिर्दिष्टानां पश्चादर्थान्तरनिर्देश इतीयत्युच्यमाने वाक्यस्यासम्बद्धार्थताप्रसङ्गात्, अत्र प्रथमनिर्दिष्टसम्बन्ध्यन्तरनिर्देश इति प्रतीतेः। **वाक्यार्थ इति**। सूत्रस्येति शेषः। संख्योपलक्षितक्रमानतिक्रमेण पदार्थान्वयप्रतीतिरस्य यथासंख्यत्वम्। पदानामर्थं प्रति गुणभावेन मिथः सम्बन्धाभावादर्थद्वारक इत्युक्तम्। **अतिरोहितस्येति**। समुदायसम्बन्धप्रतीतावनुपक्षीणैः शब्दैरेव प्रत्याय्यत्वादित्यर्थः। **अर्थानुगु(ण्यमि?ण्ये)ति**।

---

१. 'ना क', २. 'न्धो, ३ 'नामेव प', ४. 'गमप', ५. 'नाव', ६. 'तेनात्र', ७. 'यं यया — ला' क. ख. पाठ·. ८. 'दार्थाना' ख. पाठः. ९. 'यत्र' ख. ग. पाठः.

इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥"

अत्र लावण्यौकस्त्वप्रभृतीनामिन्द्वादिभिः क्रमसम्बन्धस्याव्यवहितत्वेन प्रतीतेः शाब्दं यथासंख्यम् । द्वितीयस्य यथा—

"कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः ।
जलनिधिगिरिकमलस्था हरिहरकमलासना ददतु ॥"

अत्र कज्जलादीनां सुपर्णादिभिः सम्बद्धानां जलनिध्यादिभिः

---

अवयवसम्बन्धमन्तरेण समुदायसम्बन्धानुपपत्तेः । क्रमसम्बन्धस्याव्यवहितत्वेनेति । क्रमपूर्वकस्याक्षेप्याक्षेपकभावलक्षणस्य सम्बन्धस्य सम्बन्धान्तरैरप्रतीत्यव्यवधानेन प्रतीतेः । सूत्रे उद्दिष्टानामिति बहुवचननिर्देशात् क्रमविषयाणां बहुत्वं विवक्षितम् । तच्च बहुत्वं बहूनां बहुभिः सहैकवारं द्वयोर्द्वाभ्यां द्वित्रगुणत्वादिरूपेणासकृद् वा क्रमोपनिबन्धे भवति । तदुक्तं —

"तद् द्विगुणं त्रिगुणं वा बहुषूद्दिष्टेषु जायते रम्यम् ।
यत् तेषु यैथैव तयोर्द्वयोस्तु बहुशो निबध्नीयात् ॥"

इति । अत्र रम्यमित्यनेन शोभातिशयहेतुत्वं द्विगुणत्वादावुच्यते, न त्वेकगुणत्वेऽनलङ्कारता । अन्यथा लावण्यौकसीत्यादेरुद्भटोदाहरणस्य च

"मृणालहंसपद्मानि बाहुचङ्क्रमणाननैः ।
निर्जयन्त्यानया व्यक्तं नलिन्यः सकला जिताः ॥"

इत्यस्यानलङ्कारत्वप्रसङ्गात् । तत्र लावण्यौकसीत्यादौ बहूनामेकवा(र)मुपनिबन्धः । द्वयोर्बहुशः क्रमसम्बन्धो यथा—

प्रणयिसुभटश्लाघ्ये दानाम्बुशात्रवशोणित-
स्नपितककुभौ दूरावजातकर्णधनञ्जये ।
विहितजनतायोगक्षेमे परां यदुभूपते!
भवति भजतः काष्ठामौदार्यविक्रमसम्पदौ ॥

कज्जलेत्यादावुभयमप्यस्तीत्याह — अत्र कज्जलादीनामित्यादि ।

---

१ 'कःम' क. रा. पाठः. २. 'रम्य' रा. ग. पाठः ३. 'य य' क. ख. पाठः. ४. 'णादा', ५. 'था बा ला' ग. पाठः.

संबन्धे हरिप्रभृतिभिः संबन्धः श्रुत्या समुदायनिष्ठः प्रतीयते। अर्थानुगमानुसरणेन त्ववयवानां क्रमसम्बन्धावगतिरित्यार्थं यथासंख्यम् ॥

**एकमनेकस्मिन्ननेकमेकस्मिन् वा क्रमेण पर्यायः ॥ ६० ॥**

क्रमप्रस्तावादिदमुच्यते । एकमाधेयमनेकस्मिन्नाधारे यत् तिष्ठति, स एकः पर्यायः । नन्वेकमनेकगोचरमिति प्रागुक्तेन लक्षणेन विशेषालङ्कारोऽत्रोक्तः । तत् किमर्थमिदमुच्यते इत्याशङ्क्योक्तं—क्रमेणेति । इह च क्रमप्रतिपादनाद् अर्थात् तत्र यौगपद्यप्रतीतिः । तेनास्य ततो विविक्तविषयत्वम् । तथा एकस्मिन्नाधारेऽनेकमाधेयं यत् तिष्ठति, स

---

कज्जलादीनां त्रयाणां सुपर्णादिभिरेकः क्रमसम्बन्ध, जलनिध्यादिभिर्द्वितीयः, हरिप्रभृतिभिस्तृतीय इति त्रिगु(ण)त्वम् । श्रुत्या शब्दवृत्तेन । **समुदायनिष्ठ** इति । कज्जलहिमकनकरुक्त्वलक्षणस्य धर्मसमुदायस्य हरिहरचतुराननरूपेण धर्मिसमुदायेन सम्बन्धोऽव्यवहितः प्रतीयते । **अर्थानुगमे**ति । समुदायसम्बन्धस्य समुदायिसम्बन्धमन्तरेणाघटनात् कज्जलरुक्त्वादीनां सर्वेषां धर्माणां मिथो विरुद्धेन सर्वेषु हरिप्रभृतिषु धर्मिष्वसम्भवाच्चैकैकस्यैकैकेन सम्बन्धे कर्तव्ये संख्याक्रमानतिक्रमेण प्रथमस्य प्रथमेनेत्यादिः सम्बन्धः प्रतीयत इत्यार्थत्वम् ॥

**एकमित्यादि** । एकस्य क्रमवाननेकसम्बन्धः पर्यायस्य सामान्यलक्षणम् । यथासंख्यानन्तरं पर्यायस्य लक्षणं क्रमप्रस्तावादिति हेतुनिर्देशः । विशेषालङ्कार इति द्वितीयो भेदो निर्दिश्यते । विशेषे क्रमस्य को निवारक इत्याशङ्क्याह—इह चेति । अस्य पर्यायस्य । ततः विशेषात् । एतदर्थमेव द्वितीयविशेषोदाहरणस्य 'प्रासादे, से'त्यादेर्व्याख्याने युगपदवस्थान-

---

१. 'सारेण त्व', २. 'द् स' क. ख पाठः. ३. 'न सद्वद्यस' ख. पाठः

द्वितीयः पर्यायः । नन्वत्र समुच्चयालङ्कारो वक्ष्यत इत्येतदर्थमपि क्रमेणेति योज्यम् । अत एव 'गुणक्रियायौगपद्यं समुच्चय' इति समुच्चयलक्षणे यौगपद्यग्रहणम् । अत एव क्रमाश्रयणात् पर्याय इत्यन्वर्थमभिधानम् । विनिमयाभावात् परिवृत्तिवैलक्षण्यम् । तस्यां हि विनिमयो लक्षणत्वेन वक्ष्यते । तत्रानेकोऽसंहतरूपः संहतरूपश्चेति द्विविधः । तत्र द्वैविध्यमाधाराधेयगतमिति चत्वारोऽस्य भेदाः[1] । क्रमेणोदाहरणं[2] —

"नन्वाश्रयस्थितिरियं तव कालकूट !
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥"

---

मित्युक्तम् । एतदर्थमपीति । अपिशब्देन द्वितीयपर्यायेऽपि क्रमेणेत्येतल्लक्षणानुप्रवेशित्वेन घटनीयमित्याह । अत एव पर्यायव्युत्पत्तिहेतोरेव । अन्वर्थमिति । यौगपद्याभावलक्षणस्यार्थस्यानुगमात् । नन्वत्र कस्यचिदपगमे कस्यचिदुपगमो भवति । परिवृत्तावपि 'किमित्यपास्य'त्यादावाभरणस्य वल्कलादीनामनेकेषामाधेयानां पार्वतीलक्षण एकस्मिन्नाधारे क्रमेण वृत्तिर्दृश्यते । तदस्य तस्याश्च को भेद इत्याशङ्क्याह — विनिमयाभावादिति । विनिमयो नाम कस्यचित् परित्यागेन कस्यचित् स्वीकारः । तत्र च 'निशासु स्वि'त्यादावभिसारिकादिपरित्यागेन शिवादिस्वीकार इत्येवंरूपस्यार्थस्याविवक्षितत्वाद् विनिमयाभावः । अनेक आधाराधेयलक्षणः[3] । एषां चासंहतसंहतत्वे उपात्तद्रव्यविशेषाधाराधेयत्वव्यतिरेकेणैकोपाध्यनवच्छेदावच्छेदाभ्यां द्रष्टव्ये । आधाराधेयगतमिति । प्रथमे पर्याये आधारगतं द्वितीये आधेयगतम् । आश्रयस्थितिराश्रयमर्यादा । उत्तरोत्तरविशिष्टपदा यथोत्तरविशिष्टस्थाना । अत्र हृदयकण्ठवाचामुपर्युपरि वृत्तित्वादुत्तरोत्तरवै-

---

१ 'रो भे', २ 'ण यथा — न' क ख पाठ. ३ 'पानेको' ख. पाठ

"निसृष्टरागादधरान्निवर्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः ॥"

"निशासु भास्वत्कलनूपुराणां
यः सञ्चरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः
स वाह्यते राजपथः शिवाभिः ॥"

"यत्रैव मुग्धेति कृशोदरीति
प्रियेति कान्तेति महोत्सवोऽभूत् ।
तत्रैव दैवाद् वदने मदीये
पत्नीति भार्येति गिरश्चरन्ति ॥"

अत्र कालकूटमेकमनेकस्मिन्नसंहते आश्रये क्रमेण स्थितिमन्निबद्धम् । करश्चैकोऽनेकस्मिन् संहते क्रमवान् । अधरकन्दुकयोर्निवृत्त्यपादानतया संहतत्वेन स्थितत्वात् । अभिसारिकाः शिवाश्चानेकस्वभावा असंहतरूपा एकस्मिन्नाश्रये

शिष्टयम् । निसृष्टरागादित्यादि । एतत् परिवृत्त्युदाहरणत्वेन दर्शयतो भामहोद्भटस्यास्य च विनिमयविवक्षाविवक्षे प्रयोजिके । असंहत इति । कालकूटाधारत्वव्यतिरेकेणैकोपाधिकोडीकाराभावाद्धृदयकण्ठवाचामसंहतत्वम् । क्रमेण स्थितिमदिति । प्रागथाधुनाशब्दैः क्रमस्यावगमितत्वात् । निवृत्त्यपादानतयेति । कराधारत्वमन्तरेणापि निवृत्त्यपादानत्वलक्षणैकोपाध्यवच्छिन्नत्वात् । एकस्य च करस्य युगपदधरकन्दुकयोरवस्थानासंभवात् क्रमास्थितिः । अनेकस्वभावा इत्यसंहतरूपत्वे हेतुकथनम् । शिवाना-

१. 'श्चानेको', २., ३. 'त्यु' क. पाठः

राजपथे क्रमवर्तिन्यः । वदने चैकस्मिन्नाश्रये मुग्धत्वादिवर्गः पत्नीत्वादिवर्गश्च वर्गत्वादेव संहतरूपोऽनेकः क्रमवानुपनिबद्धः ॥

**समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः ॥ ६१ ॥**

विनिमयोऽत्र[1] किञ्चित् त्यक्त्वा कस्यचिदादानम् । समेन तुल्यगुणेन त्यज्यमानेन तादृशस्यैवादानम् । तथाधिकेनोत्कृष्टगुणेन दीयमानेन न्यूनस्य हीनगुणस्य परिग्रहणम् । एवं न्यूनेन हीनगुणेन त्यज्यमानेनाधिकस्योत्कृष्टगुणस्य स्वीकारः । तदेषा त्रिप्रकारा परिवृत्तिः । क्रमप्रतिभाससम्भवात् पर्यायानन्तरमस्या लक्षणम् । समपरिवृत्तिर्यथा—

"उरो दत्त्वामरारीणां येन युद्धेष्वगृह्यत ।
हिरण्याक्षवधादेषु यशः सार्कं जयश्रिया ॥"

अत्रोरोयशसोस्तुल्यगुणत्वम् । अधिकपरिवृत्तिर्यथा —

---

मभिसारिकाणां चाधेयानां राजपथाधारत्वमन्तरेणैकोपाध्यवच्छेदाभावाद्संहतत्वम् । **वर्गत्वादेवेति** । वर्गत्वं चानुरागविरागप्रयुक्तत्वात् ॥

**समेत्यादि** । विनिमयः परिवृत्तिरिति सामान्यलक्षणम् । समेत्यादिना भेदनिर्देशः । संख्याप्रयुक्त साम्यादि नेह विवक्षितम्, अपितु गुणप्रयुक्तमिति दर्शयितुं समाधिकन्यूनशब्दानां तुल्यगुणेत्यादिना व्याख्यानम् । **क्रमप्रतिभाससम्भवादिति** । एतच्च विनिमयाभावादित्यस्य व्याख्यानावसरे दर्शितम् । **उरो दत्त्वेत्यादि** । अत्र यद्यप्युरोदानेन[2]त्साहो[3] लक्ष्यते । स चोत्साहो यशोधिगम उपायः । तथाप्यभिधेयपक्षोपाद[3]नापेक्षया परिवृत्तिर्द्रष्टव्या । उरोयशसोश्च जयश्रीसाधकत्वेतत्साधक[4]भ्यां (?) तुल्यगुणत्वम् ।

१. 'यो यत्र', २ 'स्योपादा', ३ 'द । ए' क. ख. पाठ. ४. 'त्वसाध' ग. पाठः.

"किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्धकशोभि वल्कलम्।
वद- प्रदोषेषु विकीर्णतारका
विभावरी यद्यरुणाय कल्पते ॥"

अत्रोत्कृष्टगुणैराभरणैर्न्यूनगुणस्य वल्कलस्य परिवृत्तिः। न्यून-परिवृत्तिर्यथा—

"तस्य हि प्रवयसो जटायुषः
स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्जरकलेवरव्ययात्
क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥"

अत्र कलेबरेण न्यूनगुणेन यशस उत्कृष्टगुणस्य विनिमयः।

"दत्त्वा दर्शनमेते मत्प्राणा वरतनु! त्वया क्रीताः।
किं त्वपहरसि मनो यद्दासि रणरणकमेतदसत् ॥"

अत्र पूर्वार्धे समपरिवृत्तिः। उत्तरार्धे न्यूनपरिवृत्तिः ॥

**एकस्यानेकत्र प्राप्तावेकत्र नियमनं परिसङ्ख्या ॥-६२॥-**

एकानेकप्रस्तावादिह वचनम्। एकं वस्तु यदानेकत्र-

---

**किमितीत्यादि।** यौवन इत्यनेनाभरणानामानुगुण्यादुत्कृष्टगुणत्वं, वार्धकशोभीत्यनेन वल्कलस्य यौवनानौचित्यद्वारा न्यूनगुणत्वं च व्यज्यते। **तस्य हीत्यादि।** अत्र जर्जरेत्यनेन कलेवरस्य इन्दुकिरणोज्ज्वलमित्यनेन यशसश्च न्यूनाधिकगुणत्वे व्यज्येते। **समपरिवृत्तिरिति।** दर्शनस्य प्राणानां च कामिनस्तुल्यत्वेनाभिमतत्वात् तुल्यगुणत्वम्। **न्यूनपरिवृत्तिरिति।** रणरणकेन मनसः परिवृत्तेः ॥

**प्राप्ताविति।** रागादिना प्रमाणान्तरेण वा। **एकानेकप्रस्ता-**

---

१ 'षे गिरिशं', २ 'णेन न्यून', ३ 'ते बुधे।' ग. ख. पाठ. ४. 'त्वान्न्यू' ख.पाठः।

युगपत् सम्भाव्यते, तदा तस्यैकत्र द्वितीयादिपरिहारेण नियमनं परिसङ्ख्या । परि वर्जनेन कुत्रचित् सङ्ख्यानं वर्णनीयत्वेन गणनं परिसंख्या । सा चैषा प्रश्नपूर्विका तदन्यथा चेति प्रथमं द्विधा । प्रत्येकं च परिवर्जनीयस्य शाब्दत्वार्थत्वाभ्यां द्वैविध्यमिति चतुष्प्रभेदा परिसंख्या । क्रमेण यथा:—

'किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषाः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ॥'[1]

"किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते सेव्यं[4] चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ॥"

वादिति । पर्याये एकमनेकस्मिन्निति निर्देशात् । वस्तु गुणादिरूपम् । द्वितीयादिपरिहारेण द्वितीयादिवर्जनेन । परि वर्जे(न इ ? नेने)ति । 'अपपरी वर्जने' (१.४.८८) इत्युक्तत्वात् । संख्यानमिति संख्याशब्दार्थमाह । सम्पूर्वात् ख्यातेर्भावेऽङि संख्येति रूपं, न त्वेकत्वादिवाचिवत् करण इत्यर्थः । **किं भूषणमित्यादि** । अत्र प्रश्नपूर्विका शाब्दवर्जनीया परिसङ्ख्या । अत्र यशःप्रभृतौ रत्नादौ चानेकत्र युगपत् प्राप्तं सुदृढत्वादिविशिष्टभूषणत्वादि यशःप्रभृतौ नियम्यते । यशोधिषणयोर्भूषणचक्षुष्ट्वे उपचरिते विज्ञेये । **किमासेव्यमित्यादि** । इयं प्रश्नपूर्विकैवार्थ(परि ? )वर्जनीया परिसंख्या । आर्थानि च वर्जनीयानि नगरादिस्त्र्यादिविषयो धनादिरामणीयकादिश्च, अथवा पुराणादिप्रमाणान्तरेण सेव्यादित्वेन प्रसक्तानि'

१. 'ताऽस्त्र्य', २ 'क. व', ३. 'गुणा न', ४. 'ध्येय च' क ख पाठः.

"भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥"

"कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति॥"

अत्र चालौकिकं वस्तु गृह्यमाणं वस्त्वन्तरव्यवच्छेदे पर्यवस्यतीति व्यवच्छेद्यं वस्त्वन्तरं शाब्दमार्थं चेति नियमाभावः। अलौकिकत्वाभिप्रायेणैव क्वचित् प्रश्नपूर्वकं ग्रहणम्।

"विलङ्घयन्ति श्रुतिवर्त्म यस्यां
लीलावतीनां नयनोत्पलानि।
बिभर्ति यस्यामपि वक्रिमाण-
मेको महाकालजटार्धचन्द्रः॥"

तथा 'चित्रकर्मसु वर्णसङ्करो यतिषु दण्डग्रहणानि' इत्यादौ

---

वैशिष्ट्यातिशयलिङ्गगङ्गासमीपापेक्षया निकृष्टानि पुण्यदेशान्तरादीनि। भक्तिर्भव इत्यादि। इयमप्रश्नपूर्विका शाब्दवर्जनीया। कौटिल्येत्यादि। इयमप्रश्नपूर्विकैवार्थवर्जनीया मनश्चात्रार्थं वर्जनीयम्। अत्र च कचादिगतस्य कौटिल्यस्य मनोगतस्य च भेदेऽप्यभेदाध्यवसायादेकत्वम्। ननु व्यवच्छेद्ये शब्देनानिर्दिष्टे उपात्तस्य स्वरूपकथनमात्रपरता प्रतीयेत, न त्वितरव्यवच्छेदः। अत आह—अत्र चेति। तद्धर्मयोगित्वेन लोकप्रसिद्धेषु वस्तुषु सत्स्वप्यप्रसिद्धवस्तूपादानं प्रसिद्धस्य वस्तुनस्तद्धर्मयोगित्वव्युदासे पर्यवस्यतीति व्यवच्छेद्यं वस्तु शब्देनावश्यं निर्देष्टव्यमिति न नियम इत्यर्थः। अलौकिकेति। रत्नानां भूषणत्वेन सकलजगत्प्रसिद्धत्वेऽपि किं भूषणमिति प्रष्टुरलौकिकं भूषणं किमित्यभिप्रायः। तद्वशाच्च क्वचित् परिसंख्याविशेषे प्रश्नपूर्वकत्वम्। अथवा यदि व्यवच्छेद्यमर्थसामर्थ्यादवसीयते, तदा गतार्थत्वाच्छब्देनानुपादेयमिति शाब्दत्वं विरुध्यते,

---

१. 'यते न' ख. ग. पाठः. २. 'स्तत्तद्', ३. 'द्य' ख. पाठः. ४. 'क्तेति', ५. 'त्नादीना', ६. 'द्धेऽपि' क. पाठ.

श्लेषसंपृक्तत्वमस्या अत्यन्तचारुत्वनिबन्धनम् । अत्र च नियमपरिसङ्ख्ययोर्वाक्यवित्प्रसिद्धं लक्षणं नादरणीयमिति ख्यापनाय नियमनं परिसङ्ख्येति सामानाधिकरण्येनोक्तिः । अत एवात्र पाक्षिकप्राप्तिरपि स्वीक्रियत इति युगपत् सम्भावनं प्रायिकम् ॥

**दण्डापूपिकयार्थान्तरापतनमर्थापत्तिः ॥ ६३ ॥**

दण्डापूपयोर्भावो दण्डापूपिका । 'द्वन्द्वमनोज्ञादिभ्यश्च' (५. १. १३३) इति वुञ् । पृषोदरादित्वाद् वृद्ध्यभावः । यथा अहमहमिकेत्यादाविति केचित् । अन्ये तु दण्डापूपौ विद्येते यस्यां नीतौ सा दण्डापूपिका नीतिः । एवमहं शक्तो-

---

श्य शब्देनोपादेयं, तदार्थत्वं न घटत इत्याशङ्क्याह — अत्र चेति । तद्धर्मयोगित्वेन लोकसिद्धेषु वस्तुषु सत्स्वप्यलौकिकवस्तुग्रहणाल्लौकिकैवस्तु-व्यवच्छेदः पर्यवसानवृत्त्या लभ्यते, न तु साक्षादिति व्यवच्छेद्यस्य साक्षादवगत्यपेक्षायां शाब्दत्वं, यथाकथञ्चिदप्यवगत्यपेक्षायामार्थत्वमिति शाब्दार्थत्वयोर्न नियम इत्यर्थः । श्लेषसम्पृक्तत्वमिति । श्रुतिवर्त्मादिशब्दानां कर्णमार्गादिवेदमर्यादादिलक्षणार्थद्वयवाचित्वात् । एतानि चोदाहरणान्यप्रश्नपूर्वाण्यार्थवर्जनीयानि च । आर्थश्च वर्जनीयो नगरवासी जनः । वाक्यवित्प्रसिद्धमिति । 'नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्ये'त्येवंरूपम् । अत एवात्रेति । नियमपरिसंख्ययोर्भेदस्याविवक्षितत्वात् । अत्र परिसंख्यायाम् । प्रायिकमिति । 'किमासेव्यमि'-त्यादौ नगरादिसेवादौ द्युसरित्सविधसेवादेरप्राप्तत्वात् पक्षप्राप्तत्वेन युगपत् प्राप्त्यभावेऽपि 'किं भूषणमि'त्यादिबहुतरविषयगतत्वेन दृष्टत्वात् पूर्वं युगपत् सम्भावनमुक्तमित्यर्थः ॥

पृषोदरादित्वादिति । आदिशब्दस्य प्रकारवाचित्वाद् दण्डापूपिकाशब्दस्य पृषोदरादित्वे सति वुञो ञित्त्वात् प्राप्ताया वृद्धेरभावः ।

---

१. 'त्योक्तिः ।', २. 'क्य' क. ख. पाठः. ३. 'क्य', ४. 'दौ द्यु' ख. ग. पाठः.

ऽहं शक्तोऽस्यामित्यहमहमिकेति 'मत्वर्थीयष्ठनित्याहुः'[1]। अपरे तु दण्डापूपाविव दण्डापूपिकेति 'इवे प्रतिकृतौ' (५. ३. ९६) इति कनं वर्णयन्ति। अत्र हि मूषिककर्तृकेण दण्डभक्षणेन तत्सहभाव्यपूपभक्षणमर्थात् सिद्धम्। एष न्यायो दण्डापूपिकाशब्देनोच्यते। ततश्च यथा दण्डभक्षणादपूपभक्षणमर्थादापतितं, तद्वत् कस्यचिदर्थस्य निष्पत्तौ सामर्थ्यात् समानन्यायत्वलक्षणाद् यदर्थान्तरमापतति, सार्थापत्तिः। न चेदनुमानं, समानन्यायस्य सम्बन्धरूपत्वाभावात्। असम्बन्धे चानुमानानुत्थानम्। अर्थापत्तिश्च वाक्यविदां न्याय इति तन्नयेनेहाभिधानम्। इयं च द्विविधा। प्राकरणिकादप्राकरणिकस्यार्थस्यापतने एकः प्रकारः। अप्राकरणिकात् प्राकरणिकस्यार्थादापतने द्वितीयः। आद्यो यथा—

"पशुपतिरपि तान्यहानि कृच्छ्रा-
द्गमयदद्रिसुतासमागमोत्कः।

दण्डापूपावित्यादि। अर्थान्तरनिष्पत्तौ न्यायसाम्यादर्थान्तरापतनलक्षणायां यस्यां नीतौ दण्डापूपौ निदर्शनत्वेन विधेते। मत्वर्थीयष्ठनिति। 'अत इनिठनौ' (५. २. ११५) इति विहितः। 'इवे प्रतिकृतावि'त्येतदधिकारप्रदर्शनपरम्, अप्रतिकृतित्वादनेन प्राप्त्यभावात्। दण्डापूपिकाशब्दः कस्यचिद् दण्डापूपसदृशस्य नीतिविशेषस्य संज्ञेत्युत्तरसूत्रेण 'संज्ञायां कन्' (५. ३. ७५) इत्यनेन कनो विधिरभिप्रेतः। अर्थादापतितमिति। मूषिककर्तृत्वलक्षणात्। समानन्यायत्वलक्षणात् समानन्यायत्वरूपात्। यदर्थान्तरमित्यत्र यच्छब्देनार्थान्तरापतनलक्षणो वाक्यार्थः परामृश्यते। असम्बन्धे चेति। लिङ्गलिङ्गिनोर्व्याप्यव्यापकभावलक्षणसम्बन्धपूर्वकत्वादनु-

१. 'रे द', २. 'णाद', ३. 'द्विधा', ४. 'दर्थादप्रा', ५. 'न्याय' क. ख. पाठः. ६. 'कनमिधिवर्णित्व', ७. 'त् समर्थात्। म' क. पाठः.

कमपरमवशं न विप्रकुर्यु[1]-
विभुमपि तं यदमी स्पृशन्ति भावाः ॥"

अत्र वि[2]भुवृत्तान्तः प्राकरणिक इतरजनवृत्तान्तमप्राकरणिकमर्थादाक्षिपति। द्वितीयो यथा—

"धृतधनुषि बा[3]हुशालिनि शैला न नमन्ति यत् तदाश्चर्यम्।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥"

अत्र शैलवृत्तान्तोऽप्राकरणिको रिपुवृत्तान्तं प्राकरणिकमर्थादागूरयति। क्वचि[4]च्च न्यायसाम्यस्य निमित्तं श्लेषेण निर्दिश्यते। यथा—

"अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥"

अत्र विधौ वक्र इति श्लिष्टम्। अप्राकरणिकाच्च स्थाणुवृत्तान्तात् प्राकरणिकार्थापतनम् ॥

तुल्यबलविरो[5]धो विकल्पः ॥ ६४ ॥

मानस्य। इह वाक्यन्यायमूलालङ्कारमध्ये। विभुवृत्तान्तः पशुपतिवृत्तान्तः। आगूरयति, आक्षिपतीत्यर्थः। विधौ वक्र इति श्लिष्टमिति। विधौशब्दस्य वर्णश्लेषवशेन वक्रभावलक्षणविशिष्टविधिचन्द्रमोलक्षणार्थद्वितयवाचित्वाद्, वक्रशब्दस्य प्रातिकूल्यानार्जवरूपंद्व्यर्थवृत्तित्वाच्च ॥

तुल्यबलेति। न खलु विरोधसद्भावमात्रे देवदत्तो गच्छति यज्ञदत्तो न गच्छतीत्यादौ गमनागमनयोर्वैयधिकरण्ये विकल्पः, नापि स्यायाद्

१. 'र्युं प्रभु', २. 'प्र', ३. 'वीर्यशा', ४. 'चिन्न्याय', ५. 'धे' क. ख. पाठः ६. 'न भा' ख. पाठ. ७ 'पदद्वयं क. पाठः.

विरुद्धयोस्तुल्यप्रमाणविशिष्टत्वात् तुल्यबलयोरेकत्र युगपत् प्राप्तौ विरुद्धत्वादेव यौगपद्यासम्भवे विकल्पः। औपम्यगर्भत्वाच्चात्र चारुत्वम्। यथा — 'नमयन्तु शिरांसि धनूंषि वा, कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा' इत्यादि। अत्र प्रतिराजकार्ये नमने शिरसां धनुषां च तुल्यप्रमाणविशिष्टत्वम्। सन्धिविग्रहौ चात्र क्रमेण तुल्ये प्रमाणे, प्रतिराजविषयत्वेन स्पर्धया द्वयोरपि संभाव्यत्वात्। द्वौ चेमौ विरुद्धाविति नास्ति तयोर्युगपत् प्रवृत्तिः। प्राप्नुवतश्च युगपत् प्रवृत्तिं प्रकारान्तरस्यात्रानाशङ्क्यत्वात्। ततश्च न्यायप्राप्तो विकल्पः। नमनकृतं च तयोः सादृश्यमित्यलङ्कारता। एवं कर्णपूरीक्रियन्तामित्यादौ योजनीयम्। औपम्यगर्भत्वाच्चात्र चारुत्वम्। क्वचिच्छ्लेषावष्टम्भेनाप्ययं दृश्यते। यथा —

---

भुञ्जीत चेति स्नानभोजनयोरविरुद्धयोः सामानाधिकरण्येऽपि, नापि च (न) हिंस्यात् सर्वा भूतानीति, अग्नीषोमीयं पशुमालभेतेति हिंसानिषेधविध्योरेकविषयत्वे विरोधे च सत्यपि सामान्यविशेषविषयत्वेन दुर्बलप्रबलयोरित्यभिप्रायेणाह — **विरुद्धयोरित्यादि**। **औपम्यगर्भत्वा-दिति**। अत्र वैवक्षिकमौपम्यं विवक्षितम्। शिरःप्रभृतीनां च धनुरादीनां च प्राकरणिकाप्राकरणिकत्वाभावात्। औपम्यगर्भत्वं चालङ्कारप्रस्तावादर्थलब्धमित्याह — **चारुत्वमिति**। न ह्यौपम्याभावे गृह्णाति न गृह्णातीत्यादौ विकल्पे सत्यप्यलङ्कारता, चारुत्वाभावात्। **नमन** इति। नतिं प्रति प्रयोजकव्यापारे। प्रमाणयोस्तुल्यत्वमुपपादयति — **प्रतिराजविषयत्वेनेति**। प्रकारान्तरस्य सन्धिविग्रहव्यतिरिक्तस्य। **एवं कर्णे-त्यादि**। प्रतिराजकार्ये कर्णपूरीकरणे आज्ञानां मौर्वीणां च सन्धिविग्रह-

---

१. 'धाभावे', २. 'शां', ३. 'हावत्र' क. ख. पाठ.. ४. 'त्वल', ५. 'मातुर्धीणा' ग. पाठ..

"भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥"

अत्र नेत्रे तनुर्वेति विकल्पः । उत्तमत्वाच्च तुल्यप्रमाणविशिष्टत्वम् । न चात्र समुच्चये वाशब्दः । सम्भवन्त्यामपि गतौ महाकविव्यवहारे[2] प्रयोगाभावात् । ननु विरोधनिमित्तको विकल्पः । कथं चात्र विरोधः । नैतत् । तनुमध्ये नेत्रयोः प्रविष्टत्वात् तयोः पृथगभिधानमेव न कार्यम् । कृतं च सत् स्पर्धिभाव गमयति । स्पर्धिभावाच्च विरुद्धत्वम् । नेत्रे अथवा समस्तमेव शरीरमित्यर्थावगमे[1] विकल्पस्य सुप्रत्ययत्वात् । स चात्र श्लेषाश्लिष्टो लिङ्गश्लेषस्य वचनश्लेषस्य चात्र दृष्टेः । तस्मात् समुच्चयप्रतिपक्षभूतो विकल्पाख्योऽलङ्कारः पूर्वैरकृ[3]तविवेकोऽत्र दर्शित इत्यवधातव्यम् ॥

लक्षणतुल्यप्रमाणविशिष्टत्वाद्यतिदिशति । भक्तिप्रह्वेत्यादि । अत्र विशेषणानां शीनयोस्तुल्यरूपत्वान्नपुंसकत्वस्त्रीत्वद्वित्वैकत्वविशिष्टार्थद्वयवाचित्वाच्च लिङ्गश्लेषो वचनश्लेषश्च । हितप्राप्तये नीते, ईहितप्राप्तये नीता च । नेत्रपक्षे महानिधी इति पदच्छेदः, तनुपक्षे महानिधिरिति । कुरुतामिति नेत्रपक्षे परस्मैपदं, तनुपक्ष आत्मनेपदम् । वाशब्दस्य समुच्चयद्योतकत्वेऽसम्भवेऽपि हेत्वभावादत्र विकल्पो न युज्यत इति समुच्चयवादी प्रत्यवतिष्ठते — नन्विति । कथं चेति । यथैकं प्रति प्रणिपतनधनुराकर्षणयोः समावेशो न घटते, न तथा नेत्रतन्वोरिति भावः । न कार्यमिति । पौनरुक्त्यप्रसङ्गात् । कृतं च सदिति । अपौनरुक्त्याय तत्तुल्यपदार्थान्तरप्रतीतिजननद्वारा । सुप्रत्ययत्वादिति । विकल्पस्य सुज्ञानत्वात् । स चेत्यादि ।

१ 'न्यात् गुं'. २ 'ने अथा ग्र'. ३ 'मे गु' क. ग. घ..

**एकस्य सिद्धिहेतुत्वेऽन्यस्य तत्करत्वं च ॥ ६६ ॥**

समुच्चय इत्येव । यत्रैकः कस्यचित् कार्यस्य सिद्धिहेतुत्वेन प्रक्रान्तः, तत्रान्योऽपि यदि स्पर्धया तत्सिद्धिं करोति, तदायमपरः समुच्चयः । न चायं समाध्यलङ्कारेऽन्तर्भवति । यत्र ह्येकस्य कार्यं प्रति पूर्णं साधकत्वम्, अन्यस्तु सौकर्याय काकतालीयन्यायेनापतति, तत्र समाधिर्वक्ष्यते । यत्र तु खलेकपोतिकया बहूनामवतरस्तत्र समुच्चयः । अतश्चानयोः सुमहान् भेदः । स एष समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च भवतीति त्रिधा भिद्यते । सतः शोभनस्य सता समुच्चीयमानेन योगे यथा—

"कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥"

एकस्येत्यादि । एकस्य कारणविशेषस्य प्रस्तुतसाध्यविशेषेहेतुत्वे सत्यपि । अन्यस्येत्येकत्वमविवक्षितम्, उदाहरणेषु बहूनामुपनिपातस्य दृष्टत्वात् । स्पर्धयेत्यनेन समुच्चय इत्यन्वर्थसंज्ञाविज्ञानादवगतं सर्वेषामपि कारणानां समप्रधानभावं दर्शयति । समाध्यलङ्कारे 'कारणान्तरयोगादि'त्यादिना वक्ष्यमाणलक्षणे । काकतालीयन्यायेनेति । अतर्कितप्राप्तिलक्षणोपमेयार्थवृत्तेः काकतालशब्दात् 'समासाच्च तद्विषयात्' (५. ३. १०६) इति छः । समाध्युदाहरणे च काकतालीयत्वं दिष्ट्येत्यनेन द्योतितम् । खलेकपोतिकयेति । यथा खले शाल्याद्येकदेशग्रहणार्थमभिसन्धिपूर्वकं बहवः कपोता युगपदुपनिपतन्ति, तद्वदेककार्यनिष्पादनोद्देशेन बहूनां हेतूनामुपस्थानं समुच्चयस्य विषय इत्यर्थः । अवतर इति । 'तॄ प्लवनतरणयोरि'त्यस्माद् भावे

१ 'रणात्', २ 'यमि', ३ 'न' क, ग पाठ., ४ 'स', ५ 'र्थप्रवृ',

अत्रामालिन्येन शोभनस्य कुलस्य मूर्त्यादिभिः शोभनैः समुच्चयः । एकैकं च दर्पहेतुतायोग्यं स्पर्धया निबद्धम् । असतोऽशोभनस्यासता समुच्चीयमानेन योगे यथा —

"दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥"

अत्र स्मरमार्गणानां दुर्वारत्वेनाशोभनानां तादृशैरेव प्रियतमादिभिः समुच्चयः । नववयःप्रभृतीनां च यद्यपि स्वतः शोभनत्वं, तथापि विरहविषयत्वेनात्राशोभनत्वं ज्ञेयम् । सदसतः शोभनाशोभनस्य तादृशेन सदसता समुच्चीयमानेन योगे यथा —

"शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतिः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥"

अत्र शशिनः स्वतः शोभनस्यापि दिवसधूसरत्वादशोभनत्वेन सदसतस्तादृशैरेव कामिनीप्रभृतिभिः समुच्चयः । नत्वत्र

'ऋदोरप्' (३. ३. ५७) इत्यप् । सद्योग इत्यादि । मूर्त्यादिभिः शोभनैरिति । भद्रत्वश्रुतिशालित्वपर्याप्तत्वस्फात्यखण्डितत्वयोगाच्छोभनैः । तादृशैः अशोभनैः । नववयःप्रभृतीनामित्यत्र प्रभृतिशब्देन निर्मलकुलादयो गृह्यन्ते । विरहविषयत्वेनेति । विरहिण्या तेषामशोभनत्वस्यैव भानितत्वात् । तादृशैरेवेति । स्वतः शोभनत्वेन गलितयौवनत्वादिभिरशोभन-

१. मद्गुरत्वादि. २. 'त्व' नि', ३ 'त' र ग. पठ. ४. 'त' ग पाठः.

कश्चित् समुच्चीयमानः शोभनोऽन्यस्त्वशोभन इति सदसद्योगो व्याख्येयः। ननु नृपाङ्कणगतः खल इत्यशोभनः अन्ये तु शोभना इति कथं न समुच्चीयमानस्य[१] सतस्तादृशेनासता योगः। नैतत्। नृपाङ्कणगतः खल इति प्रत्युत[२] प्रक्रमभेदाद् दुष्टमेव, नैतु[३] सौन्दर्यनिमित्तमित्युपेक्ष्यमेवैतत्। अत एवान्यै-रेवमादौ सहचरभिन्नोऽर्थ इति[४] दुष्टमेवेत्युक्तम्। प्रकृते तु[५] नृपाङ्कणगतत्वेन शोभनत्वं खलत्वेनाशोभनत्वमिति समर्थनीयम्। एवमपि विशेष्यस्य शोभनत्वं प्रक्रान्तं, विशेषणस्य त्वशोभनत्वम्, इह त्वन्यथेति न सर्वथा निरवद्यमेतत्। ननु 'दुर्वाराः स्मरमार्गणा' इत्यत्रोक्तोदाहरणवत् कथं न सदसद्योगः। नैतत्। इह शोभनस्य सतोऽशोभनत्वमिति विवक्षा।

---

त्वेन च सदसद्भिः। सदसद्योग इत्यत्र सर्वेषामेव समुच्चयविषयाणां सदसत्त्वमिदं, न तु केषाञ्चित् सत्त्वं, केषाञ्चिदसत्त्वमित्याह— **न त्वत्रेति**। अस्य व्याख्यानस्योदाहरणे वैघट्यमाशङ्क्य परिहरति— **नन्वित्यादिना**। **अन्यैरिति**। काव्यप्रकाशकारादिभिः। **सहचरभिन्न इति**। स्वतः शोभनैरुपाधिवशादशोभनैः शशिप्रभृतिभिः खलस्य भिन्नत्वात्। एवं तर्हि नृपाङ्कणगतः खल इत्येतदनुदाहरणमेवेत्याशङ्क्य, उदाहरणं घटत एव, प्रक्रमविरोधो दुष्परिहर इत्याह— **प्रकृते त्विति**। **न निरवद्यमिति**।

निरवद्यं तु यथा—

सूक्तिस्त्वद्गुणवर्णनेन रहिता रत्नं त्वदन्यैर्धृतं
रम्यं वस्तु भवद्दृशोरविषयीभूतं यदुक्ष्मापते!।
विद्वानप्यनयोर्भवच्चरणयोः सेवामनासेदिवान्
धातारं प्रथयन्ति युक्तघटनानैयत्यमुक्तादरम्॥

अत्र स्वतः शोभनायाः सूक्तेर्वर्णनीयगुणवर्णनराहित्यादशोभनायाश्च तादृग्भिरेव रत्नादिभिः समुच्चयः। एकैकं च धातुर्युक्तघटनानैयत्याभावप्रथनक्षमं

---

१. 'स्य सदस', २. 'त्युपक', ३. 'न सौ', ४. 'ते नृ', ५. 'तु' क. ख. पाठः.

तत्र त्वशोभनत्वमेवैतदिति विवक्षितमित्यस्ति भेदोऽनयोः। अत एवैकत्रोपसंहृतं मनसि सप्त शल्यानीति, सुन्दरत्वेनान्तःप्रविष्टानामपि व्यथाहेतुत्वात्। अपरत्र तु कथं सोढव्य इति सर्वथा दुष्टत्वाभिप्रायेण। तस्मादस्ति प्रकारत्रयस्य विविक्तविषयता॥

कारणान्तरयोगात् कार्यस्य[२] सुकरत्वं समाधिः॥ ६७॥

केनचिदारब्धस्य कार्यस्य कारणान्तर[३]संबन्धात् सौकर्यं यत्, स सम्यगाधानात् समाधिः। समुच्चयसादृश्यात् तदनन्तरमुपक्षेपः। तद्वैलक्षण्यं तु प्राक् प्रतिपादितमेव। उदाहरणं —

"मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम्॥"

माननिराकरणे कार्ये पादपतनं हेतुः। तत्सौकर्यार्थं तु घनगर्जितस्य कारणान्तरस्य प्रक्षेपः। सौकर्यं चोपकारायेति प्रकाशितम्॥

---

सर्वथा निबद्धम्। अशोभनत्वमेवेति। अत्र दुर्वारा इत्यादौ स्मरमार्गणादीनां केषांचित् स्वतः शोभनत्वमशोभनत्वं च नास्ति। नववयःप्रभृतयो यद्यपि स्वतः शोभनाः, तथापि तेषां स्वाभाविकमेव शोभनत्वं विरहिण्या प्रतिक्षिप्यते। ननु तदङ्गीकारेणोपाध्यन्तरवशादशोभनत्वमापाद्यत इति तत्राशोभनत्वस्यैव विवक्षेत्यर्थः। अत एवेति। शोभनाशोभनत्वस्य विवक्षणादशोभनत्वस्यैव विवक्षणाच्च। अपरत्र त्वित्यादि। उपसंहृतमित्यस्यानुषङ्गः। प्रकारत्रयस्य संयोगादिलक्षणस्य॥

सम्यगाधानादिति। कार्यस्येति शेषः। समुच्चयसादृश्यादिति। एकस्मिन् कारणे सति कारणान्तरोपनिपातरूपत्वात्। तत्सौकर्यार्थं माननिराकरणसौकर्यार्थम्॥

---

१. 'लं॥ख', २. 'र्यसु', ३. 'रेण योगात् स', ४. 'स्वाभिरत्न', ... ख. ग. पाठ..

एवं वाक्यन्यायाश्रयिणोऽलङ्कारान् प्रतिपाद्याधुना लोकन्यायाश्रयिणोऽलङ्कारा उच्यन्ते । तत्र,

**प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम् ॥ ६८ ॥**

यत्र बलवतः प्रतिपक्षस्य दुर्बलेन प्रतिपक्षेण प्रतीकारः कर्तुं न शक्यत इति तत्सम्बन्धिनो दुर्बलस्य यत् तं बाधितुं तिरस्कारः क्रियते, तत् प्रत्यनीकम् । अनीकस्य सैन्यस्य प्रतिनिधिः प्रत्यनीकमुच्यते । तत्तुल्यत्वादिदमपि प्रत्यनीकम् । यथा अनीकेऽभियोक्तव्ये तत्रासामर्थ्यात् तत्प्रतिनिधिभूतमन्यद् व्यामोहेनाभियुज्यते[2], तद्वदिह प्रतिपक्षे विजेये दुर्बलतदीयतिरस्करणमित्यर्थः । प्रतिपक्षगतत्वेन बलवत्त्वख्यापनं प्रयोजनम् । यथा —

"यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥"

अत्र राहोर्भगवान् कृष्णो बलवान् प्रतिपक्षः तदीयः पुनर्वक्त्रसादृश्यमुखेन दुर्बलश्चन्द्रमाः । तन्निराकरणाद् भगवतः प्रकर्षावगतिः ॥

---

**तत्सम्बन्धिन** इति । तच्छब्देन बलवान् प्रतिपक्षः परामृश्यते । **तद्वदि**त्यादि । प्रतिपक्षतिरस्कारासमर्थेन तदीयतिरस्कारो व्यामोहहेतुक इत्यर्थः । व्यामोहाभावे तु जेतव्यमेव जेतुमुत्सहेत, अशक्तश्चेत् तूष्णीमासीत, न त्वन्यमभियुञ्जीतेति भावः । तन्निराकरणादिति । राहुकर्तृकाच्चन्द्रस्य निराकरणादित्यर्थः । प्रकर्षावगतिः एवं नाम भगवतः प्राबल्यं, यत् तत्तिरस्कारेऽसमर्थः सन् राहुस्तत्सम्बन्धिचन्द्रतिरस्कारे प्रवर्तते ॥

१. 'य लो', २ 'हाऽभि' क. ग. पाठः.

उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम् ॥ ६९ ॥

उपमेयस्यैवोपमानभारोद्वहनसामर्थ्याद् यदुपमानस्याक्षेपः कैमर्थक्येनालोचनं क्रियते, तदेकं प्रतीपम्। उपमानप्रतिकूलत्वादुपमेयस्य प्रतीपमिति व्यपदेशः। यदप्युपमानतया प्रसिद्धस्योपमानान्तरप्रतीतिष्ठापयिषयानादरार्थमुपमेयत्वं कल्प्यते, तत् पूर्वोक्तगत्या द्वितीयं प्रतीपम्। क्रमेणोदाहरणं—'यत्र च प्रमदानां चक्षुरेव सहजं मुण्डमालामण्डनं भारः कुवलयदलदामानी'त्यादि। यथा वा—

"लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः॥"

अत्र यथासंख्यमप्यस्तीति प्राक् प्रतिपादितम्।

"ए एहि दाव सुन्दरि! कण्णं दाऊण सुणसु वअणिज्जं।
तुज्झ मुहेण किसोअरि! चन्दो उवमिज्जइ जणेण॥"

उपमानस्येत्यादि। प्रतीपमित्यन्वर्थसंज्ञयावगतम्। उपमेयस्योपमानं प्रति प्रातिकूल्यं सामान्यलक्षणम्। उपमानभारः उपमानधुरा, उपमानकार्यमिति यावत्। कैमर्थक्येनेत्यादि। अनेन तत्कार्यस्य साधितत्वात् किमर्थमिदमित्येवंरूपं निरूपणम्। उपमानस्याक्षेपो भारादिशब्देन नैरर्थक्यपर्यवसायिना द्योत्यते किंशब्देनाभिधीयत इति च दर्शयितुमुदाहरणद्वयोपन्यासः। प्राक् प्रतिपादितमिति। यथासङ्ख्यलक्षणावसरे। द्वितीयस्य प्रतीपस्योदाहरणम्—ए एहीत्यादि।

अयि एहि तावत् सुन्दरि! कर्णं दत्त्वा शृणु वचनीयम्।
तव मुखेन कृशोदरि! चन्द्र उपमीयते जनेन॥

१. 'ण यथा—य', २. 'त' क ग. पाठः

अत्रोपमानत्वेन प्रसिद्धस्य चन्द्रमसो निकर्षार्थमुपमेयत्वं कल्पितम्। वदनस्य चोपमानत्वविवक्षात्र प्रयोजिका। क्वचित् पुनर्निष्पन्नमेवौपम्यमनादरकारणम्। यथा —

"गर्वमसम्भाव्यमिमं लोचनयुगलेन[२] किं वहसि भद्रे!।
सन्तीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि॥"

अत्रोत्कर्षभाज उपमानस्य[३]प्रादुर्भाव एव न्यक्कारकारणम्। अनेन न्यायेनात्युत्कृष्टगुणत्वाद् यदुपमानभावमपि न सहते, तस्योपमानत्वकल्पनेऽपि प्रतीपमेव। यथा —

"अहमेव गुरुः सुदारुणाना-
मिति हालाहल! तात! मा स्म दृप्यः।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम्॥"

अत्र हालाहलत्वं प्रकृष्टदोषत्वादसम्भाव्योपमानभावमप्युपमानत्वेन निबद्धम्॥

---

निकर्षार्थमिति। निकर्षश्च यत्र गिज्जं इत्यनेन सूच्यते। वदनस्य चेत्यादि। अत्र चन्द्रस्योपमेयीकरणे चन्द्रनिन्दाप्रतिपिपादयिषाया न प्रयोजकत्वमिति भावः। क्वचिदित्यादि। एहीत्यादौ पूर्वार्धेन स्वानभिमतत्वप्रदर्शनादौपम्यस्यानिष्पन्नत्वं, गर्वमित्यादौ ईदृशानि सन्तीत्यनेन तस्य निष्पन्नत्वं गम्यते। न्यक्कारकारणमिति। उपमानभावस्योत्कृष्टनिष्ठतया तदपेक्षतयोपमेयस्य निकर्षप्रतीतिः। अत्युत्कृष्टगुणत्वादिति। केनचिदसदृशं मदिति शेषः। असम्भाव्योपमानभावमपीति। 'उत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परे'ति न्यायात्॥

---

१. 'न ग, २. 'भि वि भ', ३. 'मनाश्च' ग. पाठः. ४. 'न्यग्भस्या' ग. पाठ ५. 'दि भ ग पाठ.

## वस्तुना वस्त्वन्तरनिगूहनं *निमीलितम् ॥ ७० ॥

सहजेनागन्तुकेन वा लक्ष्मणा यद् वस्त्वन्तरेण वस्त्वन्तरं निगुह्यते, तदन्वर्थाभिधानं निमीलितम्। न चायं सामान्यालङ्कारः। तस्य हि साधारणगुणयोगाद् भेदानुपलक्षणं रूपम्। अस्य तूत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानमिति महाननयोर्विशेषः। सहजेन यथा—

"अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते॥"

अत्र दृक्तारल्यादिना स्वाभाविकेन लक्ष्मणा मदोदयकृतं दृक्तारल्यादि तिरोधीयते। आगन्तुकेन च यथा—

---

वस्त्वन्तरनिगूहनमित्यत्र सम्बन्धसामान्यषष्ठ्याः समासः न तु कृद्योगषष्ठ्याः। तस्याः 'कर्मणि च' (२. २. १४) इति समासनिषेधात्। वस्तुनेत्यत्र 'उभयप्राप्तौ कर्मणि' (२. ३. ६६) इति नियमात् षष्ठ्यभाव इति केचिदाहुः। अन्ये तु करणे तृतीया। वस्त्वन्तरनिगूहनमिति कर्मणि षष्ठ्या एव समास इत्याचक्षते। अपरे तु वस्तुनो वस्त्वन्तरनिगूहनमिति पाठ इत्यभिदधते। तत्र सुधीभिर्युक्तं ग्राह्यम्। लक्ष्मणेति करणे हेतौ[३] वा तृतीया। वस्त्वन्तरेणेति कर्तरि करणे[४] वा। निगूह्यत इति दीर्घविशिष्टः पाठः प्रमादजः। यकि सति गुणाभावे 'ऊदुपधाया गोहः' (६. ४. ८९) इत्यूदादेशाभावात्। अन्वर्थाभिधानमिति। निमीलयतेर्भावे निष्ठाविधानात्। न चायमिति। प्रस्तुतस्यान्येनेत्यादिना लक्षयिष्यमाणः। लक्ष्मणेति। दृक्तारल्यादिकार्यतिरोधानद्वारा लीलया मदोदयलक्षणं वस्त्व-

---

१. 'न य' क. ख. पाठः २. 'त्गू' ख पाठ ३. 'तौ तृ' क पाठः. ४. 'वेन ऊ' ख. पाठः.

---

* निरुपसर्गैव सञ्ज्ञान्यत्र अभिहिता।

"ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विपस्ते ।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥"

अत्र हिमाद्रिकन्दरानिवाससामर्थ्यात् प्रतिपन्नेन शैत्येन समुद्भावितावागन्तुकौ कम्परोमाञ्चौ भयकृतयोस्तयोस्तिरोधायकौ । तिरोधायकत्वादेव च मीलितव्यपदेशः ॥

**प्रस्तुतस्यान्येन गुणसाम्यादैकात्म्यं सामान्यम् ॥ ७१ ॥**

यत्र प्रस्तुतस्य वस्तुनोऽप्रस्तुतेन साधारणगुणयोगादैकात्म्यम् अभेदेनाध्यवसायादेकरूपत्वं निबध्यते, तत् समानत्वयोगात् सामान्यम् । न चेदमपह्नुतिः । किञ्चिन्निषिध्य कस्यचिदप्रतिष्ठापनात् । उदाहरणं —

"मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।

---

न्तरं निरोधीयत इत्यर्थः । ये कन्दरास्विति । अत्र कम्परोमाञ्चलक्षणकार्यतिरोधानद्वारा भयतिरोधायकस्य शैत्यस्य स्वकण्ठेनानुपादानेऽपि सामर्थ्यात् प्रतीतिरित्याह — अत्र हिमाद्रीत्यादिना ॥

**समानत्वयोगादिति ।** गुणसमानत्वयोगात् । यदि प्रस्तुतस्याप्रस्तुतेन गुणसाम्यवशादैकात्म्यं बध्यते, तदा प्रस्तुतमपह्नुतमेव । तत्श्च विषयापह्नवेऽपह्नुतिरित्यपह्नुतिलक्षणादस्य को विशेष इत्याशङ्क्याह — न चेदमित्यादिना । मलयजरसेत्यादावुदाहरणे हि मलयजरस-

---

१. 'यथा', [illegible] नतस्य', ३ 'न । यथा — म' ग. ग पाठः ४. 'धायकद्वा' ग. ग. पाठ .

शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव विमुक्तभियोऽभिसारिकाः ॥"
अत्र मलयजरसविलेपनादीनां चन्द्रप्रभया सहाविभाव्यतां गता इत्यभेदप्रतीतिर्दर्शिता ॥

स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः ॥ ७२ ॥

यत्र परिमितगुणस्य वस्तुनः समीपवर्तिप्रकृष्टगुणवस्तुगुणस्वीकरणं, स तद्गुणः, तस्योत्कृष्टगुणस्य गुणा अस्मिन्निति कृत्वा । न चेदं मीलितम् । तत्र हि प्रकृतं वस्तु वस्त्वन्तरेणाच्छादितत्वेन प्रतीयते । इह त्वनपह्नुतस्वरूपमेव प्रकृतं वस्तु वस्त्वन्तरगुणोपरक्ततया प्रतीयत इत्यनयोर्भेदः । उदाहरणं —

"विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥"
अत्र रविरथाश्वानामरुणवर्णस्वीकारः । तस्यापि गारुत्मतमणिप्रभास्वीकार इति तद्गुणत्वम् ॥

---

विलेपनादिविशिष्टा अभिसारिका निविष्य चन्द्रप्रभा न स्थाप्यन्ते, किं तर्हि तासां परस्परभेदानुपलम्भ एव प्रतिपाद्यते ॥

सूत्रेऽत्युत्कृष्टशब्देन स्वीकारशब्देन च स्वीकर्तुः परिमित(गुण)त्वमपादानस्य समीपवर्तित्वं च लब्धमित्याह — यत्रेत्यादि । यत्रालङ्कारे । गुणा अस्मिन्निति । उन्मज्जन्तीति शेषः । न चेदं मीलितमिति । अत्युत्कृष्टगुणेन वस्तुना निकृष्टगुणस्य वस्त्वन्तरस्य तिरोधानान्मीलितत्वाशङ्का । तत्र मीलिते वस्त्वन्तरतिरस्कारः, इह तु गुणमात्रसंसर्गः । विभिन्नवर्णा इत्याद्युदाहरणे तद्गुणद्वयं दर्शयति — अत्र रविरथेत्यादि ।

१. 'निरस्तभि', २ 'छन्', ३. 'णा', ४. 'यथा—[?]' क, ग. पाठः.
५ 'स्य वस्तुन एव ति' क. पाठः.

**सति हेतौ तद्रूपाननुहारोऽतद्गुणः ॥ ७३ ॥**

तद्गुणप्रस्तावात् तद्विपर्ययरूपोऽतद्गुण उच्यते । इह न्यूनगुणस्योत्कृष्टगुणपदार्थधर्मस्वीकारः प्रत्यासत्त्या न्याय्यः । यदा पुनरुत्कृष्टगुणसन्निधानाख्ये हेतौ सत्यपि तद्रूपस्योत्कृष्टगुणस्याननुहरणं न्यूनगुणेनाननुवर्तनं भवति, सोऽतद्गुणः । तस्योत्कृष्टगुणस्यास्मिन् गुणा न सन्तीति । यदिवा, तस्याप्रकृतस्य रूपाननुहारः सत्यनुहरणहेतावतद्गुणः, तस्याप्रकृतस्य गुणा नास्मिन् सन्तीति कृत्वा । उदाहरणं—

"धवळो सि जइ वि सुन्दर !
तह वि तुए मज्झ रञ्जिअं हिअअं ।
राअभरिए वि हिअए
सुहअ ! णिहित्तो ण रत्तो सि ॥"

---

अत्र सूर्यरथ्यैररुणेन च स्वगतश्यामत्वलौहित्यापेक्षया सातिशयलौहित्यश्यामत्वयोररुणमरतकयोः समीपवर्तिनोर्वर्णस्वीकरणम् ॥

तद्विपर्ययरूप इत्यनेन विरोधसम्बन्धमानन्तर्यहेतुं दर्शयति । न्यूनगुणस्येत्यादिना सूत्रे सति हेतावित्यनेन लब्धं दर्शयति । सन्निधानं प्रत्यासत्तिः । तद्रूपस्येत्यस्यार्थकथनमुत्कृष्टगुणस्येति, अननुहारशब्दपर्यायस्याननुहरणशब्दस्य न्यूनगुणेनाननुवर्तनमिति । तस्योत्कृष्टेत्यादिना 'नञोऽस्त्यर्थानाम्—' (वा० २. २. २४) इति बहुव्रीहिं दर्शयति । लक्षणलक्ष्यगतार्थां तच्छब्दाभ्यामत्युत्कृष्टगुणदप्रकृतं च गृह्यत इत्याह—यदिवेत्यादिना । इहाप्रकृतशब्देनाप्युत्कृष्टगुण उच्यते । उत्कृष्टगुणस्यापि कदाचिद् गुणान्तरसम्पर्कादन्यथाभावः स्यादेव । स यदा न स्यात्, तदाप्यतद्गुण एवेत्यर्थः । धवलोऽसीत्यादि ।

धवलोऽसि यद्यपि सुन्दर ! तथापि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये सुभग ! निहितो न रक्तोऽसि ॥

---

१ '[illegible]' २ 'क्रमेण यथा—ध' क, ग. पाठः

"गाङ्गमम्बु सितमङ्ग! यामुनं
कज्जलाभमुभयत्र मज्जतः।
राजहंस! तव सैव शुभ्रता
चीयते न च न चापचीयते॥"

पूर्वत्रातिरक्तहृदयसम्पर्कान्नायकस्य धवलशब्दवाच्यस्य प्राप्तमपि रक्तत्वं न निष्पन्नमित्यतद्गुणः। उत्तरत्र त्वप्रकृतस्य गाङ्गयामुनजलस्य सम्पर्केऽपि न तथारूपत्वमित्ययमप्यतद्गुण एव। धवलोऽसीति त्वतद्गुण एव। कार्यकारणभावस्यात्राविवक्षणान्न विषमालङ्कारः॥

**उत्तरात् प्रश्नोन्नयनमसकृदसम्भाव्यमुत्तरं चोत्तरम्॥ ७४॥**

यत्रानुपनिबध्यमानोऽपि प्रश्न उपनिबद्धादुत्तरादुन्नीयते, तदेकमुत्तरम्। न चेदमनुमानं, पक्षधर्मत्वादेरनिर्देशात्। यत्र च प्रश्नपूर्वकमसम्भावनीयमुत्तरं, तच्च न राकृत, तावन्मात्रेण चारुत्वाप्रतीतेः। असकृदुपनिबन्धे द्वितीय-

अत्रोत्तरार्धेऽतद्गुणप्रदर्शनं त[illegible]। [illegible]दितरात्, न तु पूर्वार्ध[illegible]लङ्कारान्तरविषयत्वाद्, इत्याह — धवलो[illegible]त्यादि। [illegible]ति। हृदयस्य नायकस्य च यत्र क्रु[illegible](भा[illegible])[illegible]देव, रञ्जनक्रियामु[illegible] सद्भाव[illegible] [illegible]
इति। [illegible]

उत्तरादित्यादि। [illegible]मिति। प्रतीतेनोत्तरेण[illegible] प्रश्न[illegible] [illegible]त्वादेरिति। त[illegible]अनुमा[illegible] [illegible]मात्रेण। द्वितीयोत्तरे असम्भावनीयो[illegible]विधानस्य सम्भावितोत्तरनि[illegible]धरत्वात्

१. 'त्र प्र' क. ख. पाठः. २. 'पे' ग. पाठः.

मुत्तरम् । न चेदं[1] परिसङ्ख्या, व्यवच्छेद्यव्यवच्छेदकपरत्वा[3]भावात् । क्रमेणो[2]दाहरणम् —

"एकाकिनी यदबला तरुणी तथाह-
मस्मिन् गृहे गृहपतिश्च गतो विदेशम् ।
कं याचसे तं[4]दिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ ! पान्थ ! ॥"

"का विसमा दव्वगई किं लद्धव्वं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥"

पूर्वत्र मम निवासोऽत्र दीयतामिति प्रश्न उत्तरादुन्नीयते । उत्तरत्र दैवगत्यादि निगूढत्वादसम्भाव्यमसकृत्प्रश्नपूर्वकमुत्तरं निबद्धम् । इतःप्रभृति गूढार्थप्रतीतिपरालङ्कारलक्षणम् ॥

संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम् ॥ ७५ ॥

इह सूक्ष्मः स्थूलमतिभिरसंलक्ष्यो योऽर्थः, स यदा कुशाग्रीयबुद्धिभिरिङ्गिताकाराभ्यां संलक्ष्यते, तदा तस्य संलक्षितस्य विदग्धं प्रति प्रकाशनं सूक्ष्मम् । तत्रेङ्गिताद यथा —

---

परिसङ्ख्यात्वमाशङ्क्य परिहरति—न चेदमित्यादिना । व्यवच्छेद्येति । दैवगत्यादेर्विषमत्वविधान एव तात्पर्यं न त्वितरनिषेध इति भावः । दैवगत्याद्युत्तरस्यासम्भाव्यत्वेऽसकृत्प्रश्नपूर्वकनिबन्धने च निगूढत्वादिति हेतुनिर्देशः । इतःप्रभृति उत्तरादारभ्य ॥

संलक्षणक्षमाणां तीक्ष्णधियां व्यावृत्त्यर्थं स्थूलमतिभिरित्युक्तम् । कुशाग्रीयबुद्धिभिः कर्तृभिः । इङ्गिताकाराभ्यां हेतुभ्याम् । इङ्गितं बुद्धिपूर्वचेष्टाविशेषः । आकारोऽबुद्धिपूर्वको विकारः । विटसम्बन्धी सङ्केतकालाभि-

---

१. 'यं' मूलपाठः. २. 'त्वात् ।', ३. 'न यथा — ए', ४. 'त्वमिद',
५. 'न तु दे' इ. म. पाठः

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥"

अत्र विटसम्बन्धी सङ्केतकालाभिप्रायो भ्रूक्षेपादिनेङ्गितेन लक्षितो रजनिकालभाविना लीलापद्मनिमीलनेन प्रकाशितः । आकाराद् यथा—

"वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥"

अत्र स्वेदकृतकुङ्कुमभेदरूपेणाकारेण संलक्षितं पुरुषायितं पाणौ पुरुषोचितखड्गलेखनेन प्रकाशितम् ॥

उद्भिन्नवस्तुनिगूहनं व्याजोक्तिः ॥ ७६ ॥

यत्र निगूढं वस्तु कुतश्चिन्निमित्तादुद्भिन्नं प्रकटतां गतं सद्[1] वस्त्वन्तरप्रक्षेपेण निगुह्यते अपलप्यते, सा वस्त्वन्तरप्रक्षेपरूपस्य व्याजस्य वचनाद् व्याजोक्तिः । यथा—

"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढो[2]ल्लस-
द्रोमाञ्चादिविसंस्थुलोऽखिलविधिव्यासङ्गतो[3] व्याकुलः ।

प्राय इत्यनेन सूक्ष्मोऽर्थो निर्दिष्टः । इङ्गितेन विटसम्बन्धिना । आकारेण तन्वीसम्बन्धिना । खड्गलेखनस्य पुरुषायितलक्षणसूक्ष्मार्थप्रदर्शनायोक्तं—पुरुषोचितेति ॥

उत्सूत्रमप्युद्भिन्नपदसामर्थ्यलभ्यमाह— निगूढमिति । लोके हि गोप्यस्य प्रकाशीभूतत्वे उद्भिन्नव्यवहारः । उद्भिन्नमित्यस्य व्याख्या प्रकटतां गतमिति, निगुह्यत इत्यस्यापलप्यत इति । वस्त्वन्तरेत्यादिना निरुक्तिः ।

१. 'प्राप्तं यद् व', २. 'ढो', ३. 'भङ्गतः' क. ख. पाठः.

हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद् वः शिवः ॥"

अत्र रोमाञ्चादिनोद्भिन्नो रतिभावः शैत्यप्रक्षेपेणापलपितः । यद्यप्यपह्नुतोऽपि सस्मितत्वख्यापनेन पुनरप्युद्भिन्नत्वेन प्रकाशितः, तथाप्यपलापमात्रचिन्तयास्यालङ्कारस्योल्लेखः । नन्वपह्नुतिग्रन्थे[१] सादृश्याय योऽपह्नवः, सापह्नुतिः । तथा अपह्नवाय[२] यत् सादृश्यं सो[३]ऽप्यपह्नुतिरिति स्थापितम् । व्याजोक्तौ चोत्तरः प्रकारो विद्यते[४] । तत् कथमियमलङ्कारान्तरत्वेन कथ्यते । सत्यम् । उद्भटसिद्धान्ताश्रयणेन[५] तत्रोक्तम् । नहि तन्मते व्याजोक्त्याख्यमलङ्करणमस्ति । इह तु तस्य सद्भावाद् व्यतिरिक्तापह्नुतिरिति पृथगयमलङ्कारो निर्दिष्टः ॥

---

शैत्यप्रक्षेपेणेति । रतिशैत्यसाधारणत्वाद् रोमाञ्चादेः । सस्मितत्वख्यापनेनेति । सस्मितं दृष्ट इति दर्शनसमयभाविना मातृमण्डलादिस्मितेन देव्यालम्बनाया रतेर्देवस्यानेन वचनेनापह्नव एव क्रियते इत्यस्यार्थस्य सूचितत्वात् । अपह्नवमात्रपर्यवसायि यथा —

व्यक्तात्मीयपराभवे सुमहति त्वद्विक्रमे किन्नरै-
रुद्गीते रिपवो विषादविगलद्बाष्पावरुद्धेक्षणाः ।
गीतस्यास्य महानहो मधुरिमेत्याचक्षते हृष्टव-
न्मध्येदिव्यसभं रणे यदुपते! गीर्वाणभूयं गताः ॥

अत्र दिव्यसदसि देवीभूतानां द्विषां वर्णनीयविक्रमश्रवणजो विषादो बाष्पगलनेनोद्भिन्नो हर्षप्रक्षेपेणापलपितः । अपह्नुतिग्रन्थ इति । श्लेषप्रस्तावे तस्या विविक्तविषयताप्रतिपादनाय विविक्तोदाहरणत्वेन शङ्किते *'आक्षिप्यादावि'त्यादौ त्वपह्नुत्यलङ्कारसद्भावप्रदर्शनपरे 'सादृश्यव्यक्तये यत्रे'त्यादिग्रन्थ इत्यर्थः । व्यतिरिक्तापह्नुतिरिति । सादृश्यव्यक्तय एवापह्नवस्तस्या

---

१. 'न्थे यथा सा', २. 'ह्नुतावपि यत्', ३. 'साप', ४. 'ते । क', ५. 'श्रयेण स' क. ख. पाठः.

* 'आक्षिप्यादौ' इतित्र पूर्वं पठितम् ।

**अन्यथोक्तस्य वाक्यस्य काकुश्लेषाभ्यामन्यथा-योजनं वक्रोक्तिः ॥ ७७ ॥**

उक्तिव्यपदेशसाम्याद् व्याजोक्त्यनन्तरं कथनम्। यद् वाक्यं केनचिदन्यथान्याभिप्रायेणोक्तं सदपरेण वक्त्रा काकुप्रयोगेण श्लेषमुखेन वान्यथान्यार्थघटनया योज्यते, तदुक्तिर्वक्रोक्तिः। काकुप्रयोगेण यथा —

"गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ॥"

एतद् वाक्यं नायिकया आगमननिषेधपरत्वेनोक्तम्। तत्सख्या काकुप्रयोगेण विधिपर्यन्ततां प्रापितम्। काकुवशाद् विधिनिषेधयोर्विपरीतार्थसंक्रान्तिः। श्लेषोऽभङ्गसभङ्गत्वेन द्विविधः। तत्राभङ्गश्लेषमुखेन यथा —

"अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥"

अत्र दारुणेति प्रथमान्तं प्रक्रान्तं श्लेषभङ्ग्या तृतीयान्ततया संपादितम्। सभङ्गश्लेषमुखेन यथा —

---

लक्षणमित्यर्थः। अन्यथा 'त्वाक्षिप्यादात्रि'त्यादौ (तु?) व्याजोक्तिसद्भावाच्छ्लेषस्याविविक्तविषयता द्रष्टव्या॥

अन्यथोक्तस्येत्यादि। सूत्रेऽन्यथावचनान्यथायोजनयोरेककर्तृकत्वं नाशङ्कनीयमित्याह — केनचिदिति, अपरेणेति च। काकुर्ध्वनेर्विकारः। काकुप्रयोगेणेति। नैष्यतीत्यत्र काकुप्रयोगात् किं नैष्यति एष्यत्येव इत्यर्थो व्यवतिष्ठते। विपरीतेति। वाच्यस्य विधेः काकुवशान्निषेधे सङ्क्रान्तिः, एवं निषेधस्य विधौ। दारुणा क्रूरा काष्ठेनेति च। त्रिगुणा

१. 'वचन', २. 'थाभि', ३. 'ण सा श्ले', ४. 'गे य', ५. 'न्तं प्रा', ६. 'न्तं स' क. ख. पाठः.

"त्वं हालाहलभृत् करोषि मनसो मूर्छां ममालिङ्गितो
हालां नैव बिभर्मि नैव च हलं मुग्धे[1]ऽस्मि किं हालिकः।
सत्यं हालिकतैव ते समुचिता सक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरोऽवताद् वः शिवः॥"

उभयमुखेन यथा —

"विजये! कुशलस्त्र्यक्षो न क्रीडितुमहमनेन सह शक्ता।
विजये कुशलोऽस्मि न तु त्र्यक्षोऽक्षद्वयमिदं पाणौ॥
किं मे दुरोदरेण प्रयातु यदि गणपतिर्न तेऽभिमतः।
क इह द्वेष्टि विनायकमहिलोकं किं न जानासि॥
चन्द्रग्रहणेन विना नास्मि रमे किं प्रतारयस्येवम्।
देव्यै यदि[2] रुचितमिदं नन्दिन्नाहूयतां राहुः॥
हा राहौ सितदंष्ट्रे भयकृति निकटस्थिते रतिः कस्याः[3]।
यदि नेच्छसि तत्त्यक्तः संप्रत्येवैष हाराहिः॥

सत्त्वरजस्तमोमयी। उभयत्रापि विभक्तिभेदेऽप्येकपदत्वादभङ्गश्लेषत्वम्। अखण्डो हालाहलशब्दो देव्या कालकूटार्थे प्रयुक्तो देवेन विभागपूर्वकं हालाहलयोर्द्वन्द्वपरत्वेन योजित इति सभङ्गश्लेषता। गोवाहने गौर्वृषः तद्रूपे वाहने। गवां वहनं प्रति प्रयोजकव्यापारे च। उभयमुखेनेति। सभङ्गाभङ्गश्लेषमुखेन। विजय इत्यादि। विजय इति देवीवाक्ये सखीसंबोधनम्। त्र्यक्ष इति। त्रिनेत्रत्वादीश्वरवाचकश्च। देववाक्ये विजय इति सप्तम्यन्तम्। त्र्यक्ष इति देवनाक्षत्रयविशिष्टश्च। मेदुरोदरेण मम दुरोदरेण लम्बोदरेण च। विनायकं विघ्नेश्वरं वीनां पक्षिणां नायकं गरुडं च। चन्द्रग्रहणेन चन्द्रस्यादानेन चन्द्रोपरागेण च। नास्मि रमे नाहं रतिं करोमि। हा राहौ। हेत्यव्ययम्। राहौ स्वर्भानौ हाररूपे अहौ च। वसुरहितेन अर्थरहितेन अष्टवसुरहितेन च। अङ्कश्चिह्नम् उत्सङ्गश्च। अत्र

१. 'ग्धे यथ हा'. २. 'दि', ३ 'स्य' क. ग. पाठ.

वसुरहितेन क्रीडा भवता सह कीदृशी न जिह्रेपि।
किं वसुभिर्नमतोऽमून् सुरासुरानेव पश्य पुरः॥
आरोपयसि मुधा किं नाहमभिज्ञा किल त्वदङ्कस्य।
दिव्यं वर्षसहस्रं स्थित्वेति न युक्तमभिधातुम्॥
इति कृतपशुपतिपाशकलीलाकलहप्रयुक्तवक्रोक्तेः।
हर्षवशतरलतारकमाननमव्याद् भवान्या वः॥"

वक्रोक्तिशब्दश्चालङ्कारसामान्यवचनोऽपीहालङ्कारविशेषसंज्ञितः॥

**सूक्ष्मवस्तुस्वभावस्य यथावद् वर्णनं स्वभावोक्तिः॥ ७८॥**

इह वस्तुस्वभाववर्णनमात्रं नालङ्कारः। तत्त्वे सर्वं काव्यमलङ्कारि स्यात्। नहि तत् काव्यमस्ति, यत्र वस्तुस्वभाववर्णनमात्रं न विद्यते। तदर्थं सूक्ष्मग्रहणम्। सूक्ष्मः कवयितृमात्रस्य गम्योऽत एव तन्निर्मित इव यो वस्तुस्वभावः, तस्य यथावदन्यूनातिरिक्तत्वेन वर्णनं स्वभावोक्तिरलङ्कारः। उक्तिवचनप्रस्तावादिहास्या लक्षणम्। भाविकरसवदलङ्काराभ्यामस्या भेदो भाविकप्रसङ्गे निर्णेष्यते। उदाहरणं —

---

मेदुरोदरेण हाराहावित्यत्र सभङ्गत्वम्। अन्यत्राभङ्गत्वम्। अलङ्कारसामान्यवचनोऽपीति। वक्रोक्तिजीवितकारादिभिस्तथाङ्गीकृतत्वात्॥

कवयितृमात्रेत्यत्रावधारणार्थेन मात्रशब्देन पदैपदार्थव्युत्पत्तिमद्गम्यत्वं व्यावर्त्यते। तन्निर्मित इति। तच्छब्देन कवयितृपरामर्शः।

---

१. 'नि', २. 'काव्य', ३. 'तस्त', ४ 'वयं', ५. 'तः', ६. 'स्याग', ७. 'य य' क ख. पाठः. ८ 'मानति' ग. पाठः ९ 'स्थितोऽयुक्तः तत्प्रस्त', १०. 'द ल', ११. 'मथा — टनागे' ख. ग. पाठः १२ 'दार्थ' ग. पाठः.

"त्वं हालाहलभृत् करोषि मनसो मूर्च्छां ममालिङ्गितो
 हालां नैव बिभर्मि नैव च हलं मुग्धेऽस्मि किं हालिकः।
सत्यं हालिकतैव ते समुचिता सक्तस्य गोवाहने
 वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरोऽवताद् वः शिवः॥"

उभयमुखेन यथा —

"विजये! कुशलस्त्र्यक्षो न क्रीडितुमहमनेन सह शक्ता।
विजये कुशलोऽस्मि न तु त्र्यक्षोऽक्षद्वयमिदं पाणौ॥
किं मे दुरोदरेण प्रयातु यदि गणपतिर्न तेऽभिमतः।
क इह द्वेष्टि विनायकमहिलोकं किं न जानासि॥
चन्द्रग्रहणेन विना नास्मि रमे किं प्रतारयस्येवम्।
देव्यै यदि रुचितमिदं नन्दिन्नाहूयतां राहुः॥
हा राहौ सितदंष्ट्रे भयकृति निकटस्थिते रतिः कस्याः।
यदि नेच्छसि [illegible] संप्रत्येवैष हाराहिः॥

अतीतानागतयोरित्यस्यार्थकथनं भूतभा[illegible] [illegible]वत् प्रध्वंसाभावप्रतियोगिनो भूताः। कल्किविष्णुयशःप्रभृतिवत् प्रागभावप्रतियोगिनो भाविनः। ते द्वयेऽपि प्रध्वंसप्रागभावप्रतियोगिनिविक्तितया वर्तमानायमाना यदा प्रत्यक्षा इव भवन्ति, तदा भाविकम्। अत्र च प्रत्यक्षायमाणत्वे हेतुरर्थगतमलौकिकत्वादत्यद्भुतत्वं, शब्दगतं व्यत्यस्तसम्बन्धराहित्याद् व्यवहितान्वयाद्यभावात् प्रसादवशेन सम्यग् झटित्यर्थानामर्पणं प्रतिपादनं च। प्रकृतिभूतस्य भावशब्दस्यार्थद्वयकथनेन भाविक निर्वक्ति — कविगतो भाव इत्यादिना। तत्राद्यः प्रकार शब्दानां प्रसन्नत्वाद्, द्वितीयस्त्वर्थानामत्यद्भुतत्वात्। सोऽत्रास्तीत्यनेन भावशब्दात् सप्तम्यर्थे मत्वर्थीयं ठनं दर्शयति। न चेदमिति। अन्यस्यान्यतया प्रतिभासम्भावनामात्रेण भ्रान्तिमत्त्वशङ्का, न [illegible]था तस्य लक्षणमत्रास्ति, सादृश्यहेतुकत्वाभा-

वस्तूनामादरप्रत्ययेन हृदि[1] सन्धार्यमाणत्वात् । नापि भूतभाविनामप्रत्यक्षाणां[2] प्रत्यक्षतयैव प्रतीतेरिवार्थगर्भीकारेणेयं प्रतीयमानोत्प्रेक्षा, तस्या अभिमानरूपाध्यवसायस्वभावत्वात् । नह्यप्रत्यक्षं प्रत्यक्षत्वेनाध्यवसीयते, किं तर्हि काव्यार्थविद्भिः प्रत्यक्षं दृश्यत इति । नापि वस्तुगत इवार्थ उत्प्रेक्षायाः प्रयोजकः, तस्या अभिमानरूपायाः प्रतिपत्तृधर्मत्वात् । यदाहुः —

"अभिमाने च सा योज्या ज्ञानधर्मे सुखादिवद्"

इति । काव्यविषये च प्रयोक्तापि प्रतिपत्तैव । नाप्यत्यद्भुतपदार्थदर्शनादतीतानागतयोः[3] प्रत्यक्षत्वप्रतीतेः काव्यलिङ्गमिदम् । लिङ्गलिङ्गिभावेन प्रतीत्यभावात् । योगिवत् प्रत्यक्षतया प्रतीतेः । नाप्ययं परिस्फुरद्रूपतया सचमत्कारप्रतिपत्ते रसवदलङ्कारः । रत्यादि[4]चित्तवृत्तीनां तदनुपक्ततया विभावादीनामपि साधारण्येन हृदयसंवादितया परमाद्वैतज्ञानिवत्

योगाभ्यासबलेस्तथा । आदरप्रत्ययेन आदरविशिष्टेन ज्ञानेन । तस्याः उत्प्रेक्षायाः । प्रत्यक्षं दृश्यमानत्वेऽपि वस्तुनः परमार्थतोऽप्रत्यक्षत्वेन इवार्थस्य विद्यमानत्वादुत्प्रेक्षात्वमाशङ्क्याह — **नापीति** । **अभिमाने चेति** । ज्ञानावान्तरजातावभिमाने योज्या न वस्तुधर्मे इत्यर्थः । वक्तुरपि प्रत्यक्षत्वप्रतीतेः प्रतिपत्तृधर्मत्वस्यानियममाशङ्क्याह — **काव्यविषय इति** । काव्यार्थनिरूपणवेलायाम् । **योगिवदिति** । यथा योगिनोऽतीतत्वादिविशिष्टोऽप्यर्थः पुरोवर्तितया प्रतीयते. तथा सहृदयस्येत्यर्थः । यदि पुनरपुरोवर्त्यपि पुर[5] इव परिस्फुरति, तदा रसवदलङ्कारः स्यादित्याशङ्क्याह — **नाप्ययमिति** । रत्यादीत्यादिशब्देन हासादयः विभावादीत्यादिशब्देनानुभावव्यभिचारिणश्च गृह्यन्ते । तदनुपक्ततया रत्याद्यनुपक्ततया । साधारण्येन सकल[6]सहृदयसा-

१ 'दि धार्य', २. 'णामप्र' क. ख. पाठ ३ 'तप्र' ग. पाठः. ४. 'मध्यादि', ५ 'ए', ६ 'लहृ' क ख पाठः.

प्रतीतौ तस्य भावात् । इह तु ताटस्थ्येन भूतभाविनां स्फुटतया भिन्नसर्वज्ञवत् प्रतीतेः । स्फुटप्रतिपत्त्युत्तरकालं तु साधारण्यप्रतीतौ[1] स्फुटप्रतिपत्तिनिमित्तक औत्तरकालिको रसवदलङ्कारः स्यात् । नापीयं[2] सूक्ष्मवस्तुस्वभाववर्णनात् स्वभावोक्तिः । तस्यां[3] लौकिकवस्तुगतसूक्ष्मधर्मवर्णने साधारण्येन हृदयसंवादसम्भवात् । इह[4] लोकोत्तराणां वस्तूनां स्फुटतया ताटस्थ्येन[5] च प्रतीतेः । क्वचित्तु लौकिकानामपि वस्तूनां स्फुटत्वेन प्रतीतौ भाविकस्वभावोक्त्योः समावेशः स्यात् । न च हृदयसंवादमात्रेण स्वभावोक्तिरसवदलङ्कारयोरभेदः । वस्तुस्वभावसंवादरूपत्वात् स्वभावोक्तेः[6] चित्तवृत्तिसंवादरूपत्वाच्च रसवदलङ्कारस्य, उभयसंवादसम्भवे[7] तु समावेशोऽपि घटते । यत्र वस्तुगतसूक्ष्मधर्मवर्णना[8] स्यात्, तत्र स्वभावोक्तिः । अन्यत्र तु रसवदलङ्कार एव । नाप्ययं शब्दानाकुलत्वहेतुको झटित्यर्थसमर्पणरूपः प्रसादाख्यो गुणः।

धारण्येन । परमाद्वैतज्ञानिनः अहमेवेदं सर्वमित्यपरोक्षज्ञानवन्तः । भिन्नसर्वज्ञाः सकलानपि भावानात्मनः पृथक्त्वेन योगबलात् साक्षात्कुर्वन्तः । औत्तरकालिक इति । ताटस्थ्येन स्फुटप्रतिपत्तिसमयभाविनो भाविकात् । स्वभावोक्तिलक्षणप्रस्तावे निर्णेष्यमाणतया निर्दिष्टमर्थं निर्णेतुमुपक्रमते — नापीयमित्यादिना । स्वभावोक्तिनिष्ठं वस्तुनो लौकिकत्वं साधारण्येन हृदयसंवादं च भाविके व्यावर्तयति — लोकोत्तराणामिति, ताटस्थ्येनेति च । क्वचिदित्यादि । लौकिकानामिति स्वभावोक्तेरनुप्रवेशो दर्शितः, (इति ?) स्फुटत्वेनेति भाविकस्य । भाविकव्यावृत्त्यर्थं निर्दिष्टस्य हृदयसंवादस्याविशिष्टत्वात् स्वभावोक्ते रसवदलङ्कारादपृथक्त्वमाशङ्क्य परिहरति — न चेति । उभयशब्देन वस्तुचित्ते निर्दिश्येते । शब्दानाकुलत्वं

1. 'तीतिनि', 2 'त औ' 3 'प्यं', 4. 'स्या', 5. '६ तु लो' क. ख. पाठः. 6. 'न प्र' ख. पाठः. 7. 'सर्व', 8. 'वान् म' क. ख. पाठः.

तस्य हि स्फुटास्फुटोभयरूपवाक्यार्थगतत्वेन झटिति समर्पणं रूपम्, अस्य तु झटिति समर्पितस्य स्फुटत्वेन प्रतीतौ स्वरूपप्रतिलम्भः। तस्मादयं सर्वोत्तीर्ण एवालङ्कारः। लक्ष्ये चायं प्रचुरप्रयोगो दृश्यते[2]। यथा —

"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥"

यथा वा हर्षचरितप्रारम्भे ब्रह्मसदसि वेदस्वरूपवर्णने। तत्र हि प्रत्यक्षमिव स्फुटत्वेन तदीयं रूपं दृश्यते[3]। एवं तत्रैव क्रौञ्चमुनिवर्णनपुलिन्दवर्णनादौ ज्ञेयम्। अयं त्वत्र विचारलेशः सम्भवति। इह क्वचिद् वर्णनीयस्य वर्णनावशादेव प्रत्यक्षायमाणत्वं, क्वचित् प्रत्यक्षायमाणस्यैव वर्णनम्। आद्यं यथोदाहृतम्। द्वितीयं यथा —

व्यत्यस्तसम्बन्धराहित्यम्। तस्य प्रसादस्य झटित्यर्थसमर्पणमात्रत्वं रूपं न त्वर्थस्य स्फुटतया प्रतीतिरपि। अस्य भाविकस्य। **झटिति समर्पितस्येति**। अर्थस्येति शेषः। **सर्वोत्तीर्ण इति**। प्राक्प्रदर्शितनयेन भ्रान्तिमदाद्यलङ्कारवर्गात् प्रसादगुणाच्च व्यावृत्तः। अलङ्कार इत्यनेन वस्तुवृत्तत्वनिरासः। लक्ष्य इत्यादिना भाविकस्यावश्याङ्गीकरणीयतां दर्शयति। मुनिर्जयतीत्यादि। समुद्रपानसमये एकचुलुकदृष्टदिव्यमत्स्यकच्छपस्यागस्त्यलक्षणस्यार्थस्य लोकोत्तरतयात्यद्भुतत्वादनाकुलशब्दप्रतिपादितत्वाच्च प्रत्यक्षायमाणत्वम्। दृष्टावित्यनेन तदवस्थाविशिष्टस्य तस्यातीतत्वमवगम्यते। भाविविषयं यथा —

त्वद्याज्ञोद्यम एव शात्रवगणः स्थाने वनं प्रस्थितो
यस्मात् संयति मण्डलीकृतधनुर्मध्ये कृतावस्थितिः।

१. 'स्य अ' ग. पाठः. २. 'ते। मु', ३. 'ते। त' क. ख. पाठः, ४. 'क्रौभमु' ग. पाठः, ५. 'नादे', ६. 'स्याङ्गी' ख. पाठः.

"अनातपत्रोऽप्ययमत्र लक्ष्यते
सितातपत्रैरिव सर्वतो वृतः ।
अचामरोऽप्येष[२] सदैव वीज्यते
विलासबालव्यजनेन कोऽप्ययम् ॥"

इति । अत्र प्रथमप्रकारविषयोऽयमलङ्कारो न प्रकारान्तरगोचरः । कविसमर्पितानां धर्माणामलङ्कारत्वात् । न हिमांशुलावण्यादीनामिव वस्तुसन्निवेशिनाम् । अपिच

"शब्दानाकुलता चेति तस्य हेतून् प्रचक्षते"

इति भामहीये 'वाचामनाकुल्येन भाविकमि'ति चोद्भटलक्षणे व्यत्यस्तसम्बन्धरहितशब्दसन्दर्भसमर्पितत्वं प्रत्यक्षायमाणत्व-

---

कोलम्बाधिपते ! किरन् दिशि दिशिच्छन्नार्कभासः शरा-
नीपद्दत्तद्दगञ्चलस्त्वमधुना न द्रष्टुमीशिष्यसे ॥

अत्र विशिष्टस्य भाविदर्शनाशक्तिविषयस्यानवगतस्य वर्णनीयस्य प्रत्यक्षायमाणत्वम् । अनातपत्रोऽपीत्यादि । आतपत्रचामराद्यभावेऽपि तद्वत्तया दृश्यमानत्वे वर्णनीयस्य माहात्म्यमेव हेतुः, न तु वर्णनम् । तच्च माहात्म्यं कोऽप्ययमित्यनेन प्रकटितम् । प्रथमप्रकारो वर्णनवशादेव प्रत्यक्षायमाणत्वलक्षणः । एवं स्वतः प्रत्यक्षायमाणस्य वर्णने भाविकत्वं निरस्य चिरन्तनलक्षणानुरोधादेवंविधे विषये भाविकत्वं न स्यादित्याह— अपिचेत्यादि ।

"चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता ।
शब्दानाकुलता[१] चेति तस्य हेतुं प्रचक्षते ॥"

स्वभिनीतता आङ्गिकादिचतुर्विधाभिनयशालित्वम् ।

"प्रत्यक्षा इव यत्रार्था दृश्यन्ते भूतभाविनः ।
अत्यद्भुताः स्यात् तद्वाचामनाकुल्येन भाविकम् ॥"

---

१. 'चि स एव शोभते', २. 'ए' क. ख पाठः, ३. 'अद्भुत', ४. 'मानुरूपदे' ग. पाठः

प्रतिपादकं कथं प्रयोजकीभवेद्, यदि वस्तुसन्निवेशिधर्मगतत्वेनापि[1] भाविकं स्यात्। तस्माद् वास्तवमेव महत्त्वमुत्तरप्रकारविषये वर्णितमिति नायमत्रालङ्कारः। यदि तु वास्तवमपि[2] सौन्दर्यं कविनिबद्धं कविनिबद्धवक्तृनिबद्धं वा सकलवक्त्रगोचरीभूतं स्वभावोक्तिवदलङ्कारतया वर्ण्येत[3], तदायमपि प्रकारो नातीव दुःश्लिष्टः। अत एव

"प्रत्यक्षा इव यत्रार्थाः क्रियन्ते भूतभाविनः।
तद्भाविकम्"

इत्येतावदेवान्यैर्भाविकलक्षणमकारि। स्वभावोक्त्या किञ्चित्सादृश्यात् तदनन्तरमस्य लक्षणं कृतम्॥

समृद्धिमद्वस्तुवर्णनमुदात्तम्॥ ८०॥

स्वभावोक्तौ भाविके च यथास्थितवस्तुवर्णनम्। तद्वि-

अत्यद्भुता भूतभाविनोऽर्था यत्र प्रत्यक्षा इव दृश्यन्ते वाचामनाकुल्येन तद् भाविकं स्यादित्यन्वयः। अनयोश्च भामहोद्भटवचनयोः प्रतीकोपादानं तावन्मात्रस्य सिसाधयिषितार्थोपयिकतया। अयमर्थः—यदि वस्तुसन्निविष्टेनापि प्रत्यक्षायमाणत्वेन भाविकत्वं स्यात्, तदा भामहोद्भटाभ्यां प्रत्यक्षायमाणत्वं प्रति हेतुतयोपन्यस्तं व्यत्यस्तसम्बन्धराहित्येन झटित्यर्थसमर्पकत्वलक्षणं वाचामनाकुल्यं कथं प्रयोजकं स्यात्। सकलवक्त्रगोचरीभूतं सकलानां वक्तृणामगोचरतां गतम्। नातीव दुःश्लिष्टः, किञ्चिद् घटत एवेत्यर्थः। अत एव वस्तुसन्निवेशिधर्मगतत्वेनापि भाविकत्वाङ्गीकारात्। एतावदेवेत्येवकारेण भामहादिवद् वाचामनाकुल्यं नोपात्तमिति दर्शयति। किञ्चित्सादृश्यादिति। उभयत्र सूक्ष्मवस्तुस्वभाववर्णनस्य विद्यमानत्वात्।

उदात्तस्य भाविकानन्तर्यें विरोधसम्बन्धो हेतुरित्याह—स्वभा-

१ 'श', २. 'दि वा' ग. पाठः ३. 'र्ण्येत, त' क. ख. पाठः. ४. भार्थस्थि', ५. 'मानुकूल्य' म. पाठः.

पक्षत्वेनारोपितवस्तुवर्णनात्मनं उदात्तस्यावसरः[1] । तत्रासम्भाव्यमानभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभोत्थापितमैश्वर्यलक्षणमुदात्तम् । उदाहरणम्[2] —

"मुक्ताः केलिविसूत्रहारगलिताः सम्माजर्नीभिः कृताः
प्रातः प्राङ्गणसीम्नि[3] मन्थरचरद्बालाङ्घ्रिलाक्षारुणाः ।
आराद् दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥"

अङ्गभूतमहापुरुषचरितवर्णनं च ॥ ८१ ॥

उदात्तशब्दसाम्यादिहाभिधानम् । महापुरुषाणामुदारचरितानाम् अङ्गीभूत[4]वस्त्वन्तराङ्गभावेनोपनिबद्धं चरितं चोदात्तम् । महापुरुषचरितस्योदाररूपत्वात् । उदाहरणं[5] —

"तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।
विचरन्[6] वाहुसहायश्चकार रक्षःक्षयं रामः ॥"

---

धोक्ताविल्यादि । असम्भाव्यमानेत्यादि । वस्तुनोऽसम्भाव्यमानविभूतियुक्तत्वेन वर्णनमित्यर्थः । उदात्तशब्दस्यौदार्यमैश्वर्यं चार्थः । तयोरैश्वर्यमत्रार्थः । उत्तरत्रौदार्यम् । ऐश्वर्यं च न स्वतः सम्भवि, किं तर्हि कविप्रतिभोत्थापितमेवेत्याह — कविप्रतिभेत्यादि । कृता निक्षिप्ताः । अश्रेद्धया विद्वद्भवनविभूतेरसम्भाव्यमानत्वं स्पष्टमेव ॥

पूर्वस्माल्लक्षणवल्लक्ष्यवाचिनोऽप्युदात्तशब्दस्यार्थो भिद्यते । औदार्यवाचकत्वात् । अतो वाचकशब्दस्वरूपसाम्यमत्रानन्तर्यहेतुरित्याह — उदात्तशब्दसाम्यादिति । महापुरुषाणामित्यस्य व्याख्या उदारचरितानामिति । अङ्गभूतेत्येतच्च न महापुरुषाणां विशेषणम्, अपि तु तच्चरितस्य तात्कालिकं विशेषणम् । अङ्गभावश्च न महापुरुषसम्बन्धिन्येव प्रधानभूते

---

१. 'वस्योदा', २ 'यथा — मु', ३. 'धा' क. ग. पाठः. ४. 'ङ्गि' ग. पाठः. ५. 'यथा — त', ६. 'निवसन्' क. ख. पाठः. ७ 'ङ्गिभू' ख. पाठः.

अत्रारण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितम् ॥

**रसभावतदाभासतत्प्रशमानां निवन्धे रसवत्प्रेयऊर्जस्विसमाहितानि ॥ ८२ ॥**

उदात्ते महापुरुषचरितस्य चित्तवृत्तिरूपत्वाच्चित्तवृत्तिविशेषस्वभावत्वाच्च रसादीनामिह तद्वदलङ्काराणां प्रस्तावः । अतएव चत्वारोऽलङ्कारा युगपल्लक्षिताः । तत्र विभावानुभावव्यभिचारिभिः प्रकाशितो रत्यादिश्चित्तवृत्तिविशेषो रसः । भावो विभावानुभावाभ्यां सूचितो निर्वेदादिस्त्रयस्त्रिंशद्भेदः । देवतादिविषया च रतिः । तदाभासो रसाभासो भावाभासश्च । आभासत्वमविषयप्रवृत्त्यानौचित्यात् । तत्प्रशम उक्तप्रकाराणां निवर्तमानत्वेन प्रशाम्यदवस्था । तत्र रसस्य परं विश्रान्तिरूपत्वात् सा न सम्भवतीति परिशिष्टभेदविषयोऽयं द्रष्टव्यः । एषामुपनिबन्धे क्रमेण रसवदादयोऽलङ्काराः । रसो विद्यते यत्र निवन्धने व्यापारात्मनि, तद्

चरिते रावणवधादौ सेतुबन्धादिवत्, किं तर्ह्यन्यास्मिन् वस्तुनीत्याह—अङ्गीभूतेत्यादि । अङ्गिशब्दान्विवः । अङ्गत्वेन वर्णितमिति । उपलक्षणत्वेन निर्दिष्टत्वात् ॥

चित्तधृत्तिरूपत्वादिति । महापुरुषचरितस्योत्साहादिरूपत्वात्[3] । तद्वदलङ्काराः रसादिमदलङ्काराः । अत एव चित्तवृत्तिविशेषस्वभावरसादिरूपत्वादेव । देवतादीत्यादिशब्देन नृपगुरुपुत्रादयो गृह्यन्ते । कान्तालम्बनायास्तु रतेर्व्यक्तत्वे शृङ्गारतैव । अनौचित्यादिति । कामक्रोधादिकारणवशाच्छास्त्रविरुद्धेन रूपेणोपनिवन्धादविषयवृत्तत्वेनानौचित्यम् । सा प्रशाम्यदवस्था । परिशिष्टेति । भावादिविषयः । अयं तत्प्रशमो द्रष्टव्यः । व्यापारात्मनीत्यनेन सूत्रे निबन्धशब्दो भावसाधनः, न त्वधिकरणसाधन-

१. 'तद', २. 'आपि र' क. ख. पाठः. ३. 'शब्दस्यो' ख. ग. पाठः.

रसवत् । प्रियतरं प्रेयो निबन्धनमेव । एवमूर्जो बलं विद्यते यत्र, तदपि निबन्धनमेव । अनौचित्यप्रवृत्तत्वाच्च तत्र बलयोगः । समाहितः परिहारः । स च प्रकृतत्वादुक्तभेदविषयः प्रशमपर्यायः । तत्र यस्मिन् दर्शने वाक्यार्थीभूता रसादयो रसवदाद्यलङ्काराः, तत्राङ्गभूतरसादिविषये द्वितीय उदात्तालङ्कारः । यन्मते त्वङ्गभूतरसादिविषये रसवदाद्यलङ्काराः, अन्यत्र रसादिध्वनिना व्याप्तत्वात् तत्र द्वितीयोदात्तालङ्कारस्य विषयो नावशिष्यते, तद्विषयस्य रसवदादिना व्याप्तत्वात्, तत्र रसवत उदाहरणम् ।

---

तया रसादिनिबन्धनक्रियाधिकरणभूतकाव्याभिधायीत्याह । काव्याभिधानपरे हि रसवदादिशब्देन रसवदलङ्कार इत्यादिनिर्देशो न घटते । प्रियतरमित्यादि । लोके हि यत्र चित्तस्यात्यासङ्गः, तत् प्रियतरमुच्यते । प्रियतरशब्दो मुख्यया वृत्त्या रत्यालम्बनेषु देवतादिषु वर्तमानो लक्षणया रतौ वर्तते, ततश्च रतिसहचरितं भावकदम्बकं छत्रिन्यायेन लक्षयंस्तथाविधभावकदम्बकविषये निबन्धने उपचारेण वर्तत इति निबन्धनस्य प्रेयस्त्वम् । ऊर्जो बलमित्यादि । ऊर्जस्विशब्दस्य 'ज्योत्स्नातमिस्रा–' (५.२.११४) इत्यादिना मत्वर्थे निपातितत्वात् । परिहार इत्यनेन भावे निष्ठान्तः समाहितशब्द इत्याह । तत्र यस्मिन्नित्यादिना रसादिध्वनेर्द्वितीयोदात्तालङ्कारस्य च रसवदादेश्च त्रयाणामपि स्वीकरणं न संगच्छत इत्याह । यस्मिन् दर्शने उद्भटादिमते । द्वितीय इति । अङ्गभूतमहापुरुषचरितवर्णनलक्षणः । तस्य हि वस्त्वन्तरं प्रत्यङ्गभूता महापुरुषाश्रया उत्साहरत्यादिप्रकर्षात्मानो वीरशृङ्गारादयो विषयः । यन्मते आनन्दवर्धनादिमते । अन्यत्र वाक्यार्थीभूतरसादिविषये । अन्ये तु — अन्यस्मिन्नपि मते रसाद्याश्रयाणां महतामुपलक्षणभावेनाङ्गभाव उदात्तस्य विषयः । यथा 'तदिदमरण्यमि'त्यादौ । यत्र तु रसादीनामेव प्रकारान्तरेणाङ्गभावः, तत्र

१. 'च इत्यन्तम् । ऊर्जो' ग. पाठः. २. 'कारि' क, ग. पाठः. ३. 'पु वर्ते' ग. पाठः ४. 'तो रे' ग. पाठ. ५. 'अन्तर' ग. पाठः.

"किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद् दर्शनं
केयं निष्करुण! प्रवासरुचिता केनासि दूरीकृतः।
स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः॥"

एतन्मतद्वयेऽप्युदाहरणम्। तत्र वाक्यार्थीभूतोऽत्र करुणो रसः। अङ्गभूतस्तु विप्रलम्भशृङ्गारः। एवं रसान्तरेपूदाहार्यम्। प्रेयोलङ्कारादौ विशेषमनपेक्ष्योदाह्रियते।[2]

"गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु [किम्॥"

अत्र नायिकाया हर्षाख्यो व्यभिचारिभावः। यथा वा—

"तद्वक्त्रामृतपानदुर्ललितया दृष्टया क्व विश्रम्यतां
तद्वाक्यश्रवणाभियोगपरयोः श्राव्यं कुतः श्रोत्रयोः।

---

"अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥"

इत्यादौ रसवदाद्यलङ्कार इति त्रितयस्वीकरणमपि संगतमेवेत्याहुः। मत-द्वयेऽपीति। पूर्वस्मिन् मते करुणापेक्षयोत्तरत्र विप्रलम्भशृङ्गारापेक्षया रसवदलङ्कारः। एवं रसान्तरेष्विति। सम्भोगशृङ्गारे वीररसादौ च। प्रेयोलङ्कारादावित्यादिशब्देन ऊर्जस्विसमाहिते गृह्येते। विशेषम् अङ्गाङ्गिभावलक्षणम्। उदाहरणद्वयोपादानं स्त्रीपुंसयोराश्रययोरङ्गिनोः सम्भोगविप्रलम्भयोर्वा भेदात्। परिशिष्टानां रत्यादिभावानामुदाहरणाप्रदर्शनं

---

१. 'रसवत्ता', २. 'वि। तत्र प्रेयो॰ यथा—गा', ३. 'द्विगुणे' क ख. पठ॰, ४. 'या रस' ख. ग. पाठः

एभिस्तत्परिरम्भनिर्भरभरैरङ्गैः कथं स्थीयतां
कष्टं तद्विरहेण सम्प्रति वयं कृच्छ्रामवस्थां गताः ॥"

अत्र चिन्ताख्यो व्यभिचारिभावः । एष एव[2] च भावालङ्कारः। भावस्य चात्र स्थितिरूपतया वर्तनम्। शान्त्युदयावस्थे[3] तु वक्ष्येते[4] । ऊर्जस्वी यथा —

"दूराकर्षणमोहमन्त्र[5] इव मे तन्नाम्नि[6] याते श्रुतिं
चेतः कालकलामपि प्रकुरुते नावस्थितिं तां विना ।
एतैराकुलितस्य[7] विक्षतरतेरङ्गैरनङ्गाकुलैः
सम्पद्येत कथं तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम् ॥"

अत्र रावणस्याभिलापश्शृङ्गार औत्सुक्यं च व्यभिचारिभावोऽनौचित्येन[8] प्रवृत्तौ । समाहितं यथा —

"अक्ष्णोः स्फुटाश्रुकलुषोऽरुणिमा विलीनः
शान्तं च सार्धमधरस्फुरणं भ्रुकुट्या ।
भावान्तरस्य तव चण्डि! गतोऽपि रोषो
नोद्गाढवासनतया प्रसरं ददाति ॥"

---

ग्रन्थविस्तरभयात् । एष एवेत्यादि । प्रेयोलङ्कारस्यैव भावालङ्कार इति संज्ञान्तरमित्यर्थः । शान्त्युदयवत् स्थितेरप्यलङ्कारत्वेनाकथनं नासंभवाद्, अपि तु उक्तप्रेयोरूपत्वादेवेत्याह[10] — भावस्य चात्रेत्यादि । अत्र प्रेयसि। वक्ष्येते इति । समाहिते शान्त्यवस्था । भावोदये उदयावस्था । अत्र रावणस्येति । पूर्वार्धे आभिलापिकंशृङ्गारस्य प्रतीतिः, उत्तरार्धे औत्सुक्यस्येत्येवंरूपौ रसव्यभिचारिणौ परदारविषयत्वेन शास्त्रविरुद्धत्वाद्-

1. 'न' क. ख. पाठः. २. 'वे', ३ 'स्था'. ४. 'क्ष्ये' ग. ग. पाठः, ५. 'होमम' क., 'मन्त्रमोह इ' ग. पाठः. ६ 'ने', ७. 'वीक्षितनर्तैः', ८. 'च रसव्य', ९. 'त्सत्र' क. ग. पाठः. १० 'योलङ्कारस्वरूपादे' ख. ग. पाठः. ११. 'का' ग., 'स' ए. पाठः.

अत्र[१] कोपस्य प्रशमः[२] । एवमन्यत्राप्युदाहार्यम् ।

"तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत् सम्प्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात्[३] तन्व्यापि तद्विस्मृतम् ॥"

"एकस्मिञ्छयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥"

अत्रेर्ष्याक्रोधात्मनो मानस्य प्रशमः । एवमन्यत्राप्युदाहार्यम् ॥

**भावोदयसन्धिशबलताश्चैते पृथगलङ्काराः ॥ ८३ ॥**

भावस्योक्तरूपस्योदय उद्गमावस्था, सन्धिर्द्वयोर्विरुद्धयोः स्पर्धिभावेनोपनिबन्धः, शबलता बहूनां पूर्वपूर्वोपमर्द[४]नेनोपनिबन्धः[५] । एते च पृथग् रसवदादिभ्यो भिन्नत्वेनालङ्काराः । एतत्प्रतिपादनं चोद्भटादिभिरेषां पृथगलङ्कारत्वेन

नौचित्येन[६] प्रवृत्तौ । अतो रसाभासभावाभासयोर्द्वयोरप्येतदुदाहरणम् । अत्र कोपस्येति । कोपः रौद्रस्थायिभावः क्रोधः, तस्य च रसत्वेनानभिव्यक्तौ व्यभिचारित्वाभावाङ्गीकाराद् भावत्वमाश्रित्य तत्प्रशमो भावप्रशमत्वेनोदाहृतः । एवमन्यत्रापि स्थायिभावानां शान्त्यादिवचने भावशान्त्यादित्वं द्रष्टव्यम् । अत्रेर्ष्येत्यादि । पूर्वत्रोदाहरणे नायिकाश्रयस्येर्ष्यामानस्य, उत्तरत्रोभयाश्रयस्य प्रणयक्रोधस्वरूपस्य ॥

सूत्रे पृथगित्यस्यावध्यनिर्देशादवधिं दर्शयति — **रसवदादिभ्य** इति । **भिन्नत्वेनेति** । यद्यपि भावोदयादिषु तत्तद्भावानां स्वानुभावविभा-

१ 'स्य', २. 'मः । त', ३. 'च', ४. 'र्वोप', ५. 'र्दनोप' क. ख. पाठः.
६. 'त्वप्र' ख. ग. पाठः ७ 'द्रस्य स्था' ग. पाठः

निर्दिष्टत्वात् । अथ च संसृष्टिसङ्करवैलक्षण्येनैते सर्वेऽलङ्काराः पृथक् केवलत्वेन, अलङ्कारा इति सर्वालङ्कारशेषत्वेनोक्तम् । संसृष्टिसङ्करयोर्हि संपृक्ततया सिद्धानामलङ्काराणां स्थितिः, तद्वैलक्षण्यप्रतिपादनमेतत् । तत्र भावोदयो यथा —

"एकस्मिञ्छयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि ।
२संवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं
मा भूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥"

अत्रौत्सुक्यस्योदयः । भावसन्धिर्यथा —

"वामेन नारीनयनाश्रुधारां कृपाणधारामथ दक्षिणेन ।
उत्पुंसयन्नेकतरः करेण कर्तव्यमूढः सुभटो बभूव ॥"

---

वच्यञ्जितत्वात् प्रेयसस्तत्तद्भावाद्यभिव्यञ्जितस्य रसवशेन रसवतो वालङ्कारत्वं सुवचम् । तथापि कविसंरम्भगोचरानुदयादीन् विशेषानाश्रित्यालङ्कारान्तरत्वेन निर्दिश्यन्त इत्यर्थः । भावोदयभावसन्धिभावशबलताश्चेत्येतावत्येव निर्देष्टव्ये एते पृथगित्यादिवचनस्य प्रयोजनमाह — एतत्प्रतिपादनं चेत्यादि । एते पृथगित्यादियोगविभागेनार्थान्तरप्रतिपादनलक्षणं प्रयोजनान्तरमप्यस्तीत्याह — अथ चेत्यादिना । एते सर्वे इति । उक्तलक्षणाः पुनरुक्तवदाभासादय एतत्पर्यन्ताः । केवलत्वेनालङ्कारान्तरासम्मिश्रत्वेन । सर्वालङ्कारेति । न तु भावोदयादिमात्रशेषत्वेन । संसृष्टीत्यादि । पृथक्सिद्धरूपाणामलङ्कारान्तराणां सम्पृक्ततया संसृष्टिसङ्करयोः स्थितिरित्यर्थः । औत्सुक्यस्योदय इति । विशिष्टस्य वीक्षणस्य तदनुभावत्वात् । उत्पुंसयन् उन्मार्जयन् । अत्राश्रुधाराकृपाणधारोन्मार्जनलक्षणानुभावव्यञ्जितयोर्नायिकालम्बनखेदरणविषयौत्सुक्ययोः स्पर्धिभावः कर्त-

१. 'सङ्करसंसृष्टिवै', २ 'आ', ३. मुग्धः गु' ए. ख. पाठः ४. 'भवम् । त' क. पाठः. ५. 'स्रोवं नि' ग पाठः. ६. 'निरभे' ग. ग. पाठः. ७ 'नविशे' क ख. पाठः.

अत्र स्नेहाख्यैरतिभावरणौत्सुक्ययोः सन्धिः । भावशबलता यथा —

"क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः! स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं पा-
[स्यति ॥"

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ॥

तदेते चित्तवृत्तिगतत्वेनालङ्कारा लक्षिताः । अधुनैषां सर्वेषामलङ्काराणां संश्लेषसमुत्थापितमलङ्कारद्वयमुच्यते । तत्र संश्लेषः संयोगन्यायेन समवायन्यायेन वेति द्विधा । संयोगन्यायो यत्र भेदस्योत्कटतया स्थितिः । समवायन्यायो यत्र तस्यैवानुत्कटत्वेन वर्तनम् । तत्रोत्कटत्वेन स्थितौ तिलतण्डुलन्यायः । इतरत्र तु क्षीरनीरसादृश्यम् । क्रमेण तदुच्यते —

**एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः ॥ ८४ ॥**

---

व्यमूढ इत्यनेन द्योतितः । अत्र वितर्केत्यादि । क्वाकार्यं शशलक्ष्मणः क्व च कुलमित्यादिवागारम्भानुभावसूचितस्य वितर्कादेर्भूयोऽपि दृश्येत सेत्यादिवाचिकानुभावसूचितेनौत्सुक्यादिना उपमर्दितत्वात् शबलता ॥

तदेत इति । रसवत्प्रभृतयो भावशबलतापर्यन्ताः । एतच्चैतेषां मिथः सम्बन्धख्यापनायोक्तम् । तस्यैव भेदस्यैव । तदा ते इत्यत्र तच्छब्देन युग-

---

१. 'स्यमा', २ 'तद्विषयत्वे', ३. 'ना म', ४. 'चे' क. ख. पाठः. ५ 'स्यम् । ए' क. पाठः. ६. 'चैषा' ख. पाठः

उक्तालङ्काराणां यथासम्भवं यदि क्वचिद् युगपत् संघटना स्यात्, तदा ते किं पृथक्त्व एव पर्यवसिताः, उत तदलङ्कारान्तरमेव किञ्चिदिति विचार्यते — तत्र यथा बाह्यालङ्काराणां सौवर्णमणिमयप्रभृतीनां पृथक् चारुताहेतुत्वेऽपि संघटनाकृतं चारुत्वान्तरं जायते, तद्वत् प्रकृतालङ्काराणामपि संयोजने चारुत्वान्तरमुपलभ्यते । तेनालङ्कारान्तरप्रादुर्भावो न पृथक् पर्यवसानमिति निर्णयः। अलङ्कारान्तरत्वे च संयोगन्यायेन स्फुटावगमो भेदः, समवायन्यायेन वाऽस्फुटावगम इति द्वैधम् । पूर्वत्र संसृष्टिरुत्तरत्र तु सङ्करः । अत एव तिलतण्डुलन्यायः क्षीरनीरन्यायश्च तयोर्यथार्थतामेव गमयतः । तत्र तिलतण्डुलन्यायेन भवन्ती संसृष्टिस्त्रिविधा, शब्दालङ्कारगतत्वेनार्थालङ्कारगतत्वेनोभयालङ्कारगतत्वेन च । सङ्करस्तु प्रभेदयुक्तो वक्ष्यते । तत्र शब्दालङ्कारसंसृष्टिर्यथा —

"कुसुमसौरभलोभपरिभ्रम-
भ्रमरसंभ्रमसंभृतशोभया ।
वनितया विदधे कलमेखला-
कलकलोऽलकलोलदृशान्यया ॥"

पत् सङ्घटितानामुक्तालङ्काराणां प्रत्यवमर्शः, उत तदित्यत्र तच्छब्देन प्रतिनिर्दिश्यमानालङ्कारान्तरलिङ्गभाजा युगपत् सङ्घटना परामृश्यते । प्रकृतालङ्काराणां पुनरुक्तवदाभासादीनां काव्यालङ्काराणाम् । यथार्थ(ते ? ता-मि)ति । लोको हि तिलतण्डुलवत् संश्लेषेऽपि स्फुटभेदानर्थान् संसृष्टा इति

१. 'वा', २. 'भ्रम', ३. 'मवगमर्थो।न', ४. 'विधा' क. ख. पाठः. ५. 'तिलतण्डुलेति।' ख. पाठः.

अत्रानुप्रासयमकयोर्विजातीययोः संसृष्टिः । अत्रैव लकलोलकलो कलोलकलोल इति सजातीययोर्यमकयोः संसृष्टिः । अर्थालङ्कारसंसृष्टिर्यथा —

"देवि ! क्षपा गलति चक्षुरमन्दतार-
मुन्मीलयाशु नलिनीव सभृङ्गमब्जम् ।
एष त्वदाननरुचेव विलुण्ठ्यमानः
पश्याम्बरं त्यजति निष्प्रतिभः शशाङ्कः ॥"

अत्र विजातीययोरुपमोत्प्रेक्षयोः संसृष्टिः ।

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥"

अत्रोत्प्रेक्षयोः सजातीययोरुत्प्रेक्षोपमयोर्विजातीययोश्च संसृष्टिः । उभयसंसृष्टिर्यथा —

"आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु वो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥"

---

व्यवहरति, क्षीरनीरवदस्फुटभेदान् सङ्कीर्णा इति । **अनुप्रासयमकयो**रिति । कुसुमसौरभेत्यादौ छेकानुप्रासस्य विद्यमानत्वात् । **सजातीययो**रिति । यमकत्वेन निरर्थकत्वेन च । **उपमोत्प्रेक्षयो**रिति । पूर्वार्धे पाण्ड्योऽयमित्यादिवद् बिम्बप्रतिबिम्बभावोपलक्षितसाधारणधर्मवत्युपमा । उत्तरार्धेऽम्बरत्यागनिमित्ता क्रियाहेतूत्प्रेक्षा । **सजातीययो**रिति । पूर्वार्धेऽनुपात्तनिमित्तयोः क्रियास्वरूपोत्प्रेक्षयोः, उत्तरार्धे ऐकरूप्यनिर्दिष्टसाधारणधर्माया उपमाया विद्यमानत्वात् । पूर्वनिर्दिष्टयोरुत्प्रेक्षयोर्द्वित्वेऽपि जातिपरत्वेनैकत्वस्य विवक्षणादुपमोत्प्रेक्षयोरिति द्विवचनम् । उभयसंसृष्टिः

अत्रोपमानुप्रासयोः संसृष्टिः । पादाम्बुजमित्यत्र ह्युपमायां मञ्जीरशिञ्जितयोगो व्यवस्थापकं प्रमाणम् । स हि[1] रूपके प्रतिकूलः पारिशेष्यादुपमां प्रसाधयति[2] । तदेषा त्रिविधा संसृष्टिर्निर्णीता ॥

अधुना क्षीरनीरन्यायाश्रयेण तु सङ्करलक्षणमुच्यते—

**क्षीरनीरन्यायेन तु सङ्करः ॥ ८५ ॥**

---

शब्दार्थालङ्कारसंसृष्टिः । उपमानुप्रासयोरिति । पादाम्बुजमित्यत्र लुप्तधर्मद्योतकसमानधर्मायाः समासोपमायाः, मञ्जुमञ्जीरेत्यत्रैकधर्मो समुदायसादृश्यलक्षणस्य वृत्त्यनुप्रासस्योत्कटतया प्रतिभासात् । पाद एवाम्बुजम् अम्बुजमिव पाद इति सन्देहसङ्करो नाशङ्कनीय इत्याह— पादाम्बुजमित्यत्र हीति । उभयसंसृष्टिवत् पूर्वमुभयगतत्वेनेत्येतावतैव शब्दार्थालङ्कारगतत्वेनेत्यस्य सिद्धावप्युभयालङ्कारगतत्वेनेति वचनमुभयालङ्कारत्वेन वक्ष्यमाणानां लाटानुप्रासादीनामपि संसृष्टिर्भवतीति ज्ञापनार्थम् । सा यथा—

> द्विपन्मृगमृगाधिपं भुवनजाड्यवैश्वानर-
> प्रतापमुपवर्णयेद् यदुपतिं कथं मादृशः ।
> तिरस्कृतपुलोमजिद्गुरुधिया धियाभ्यर्हितं
> परापदपरापदस्फुटसरोजकान्तेक्षणम् ॥

अत्र द्विपन्मृगमृगेति लाटानुप्रासस्याश्लिष्टपरम्परितेन सहैकवाचकानुप्रविष्टत्वं धिया धियेति सजातीयेन भुवनजाड्यवैश्वानरप्रतापमिति श्लिष्टपरम्परितेन पराप(दमि ? दि)त्यादौ परसम्बन्ध्यापल्लक्षणेन तदपलापप्रदत्वात्मना चार्थेन परापच्छब्दस्य चापराप(च्छ ? दश)ब्दस्य चैवान्वयाद् यमकयोस्तु द्वयोरपि परापदशब्दयोरानर्थक्यादुभयानर्थक्यविशिष्टयमकलुप्त(धर्म ?)द्योतकसमासोपमालक्षणशब्दार्थालङ्कारवृत्तिना संसृष्टयलङ्कारेण (वा ? ) विजातीयेन च संसृष्टिः ॥

---

१. 'शा', २. 'द', ३. 'त्रिधा' क. ग. पाठः. ४. 'दृश' ख. ग. पाठः, ५. 'दृ' क. पाठः.

मिश्रत्व इत्येव। तत्रोत्कटभेदमनुत्कटभेदं च मिश्रत्वम्। तत्रोत्कटभेदा संसृष्टिरुक्ता। अनुत्कटभेदः सङ्करः। [२]तच्च मिश्रत्वमङ्गाङ्गिभावेन संशयेन एकवाचकानुप्रवेशेन च त्रिधाभवत् सङ्करं त्रिभेदमुत्थापयति। क्रमेणो[३]दाहरणम्—

"अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी॥"

अत्राङ्गुलीभिरिवेत्युपमा। सैव सरोजलोचनमित्यस्या उपमायाः प्रसाधिका। रजनीमुखमिति श्लेषमूलातिशयोक्तिः। प्रारम्भवदनाख्ययो[४]र्मुखयोरभेदाध्यवसायात्। अत एव च तयोरङ्गाङ्गिभावः। एवं [५]च वाक्योक्तसमासोक्ते उपमे श्लेषानुगृहीता चातिशयोक्तिरुत्प्रेक्षायाश्चुम्बतीवेति प्रकाशिताया

---

**मिश्रत्व इत्येवेति**। उपलक्षणमेतद् एषामित्यस्य चानुवृत्तेः। **अङ्गुलीभिरिवेत्युपमेति**। सन्निग्रहणमात्रस्य साधारणधर्मत्वे ऐकरूप्येण निर्देशः। तत्कर्मीभूतयोस्तु केशसञ्चयतिमिरयोर्बिम्बप्रतिबिम्बभावः। **सैवेति**। अङ्गुलीभिरिवेत्युपमैव। अत्र मुख्यतयावगम्यमाना हि मरीचयः सरोजमुकुलीकार एवानुकूल्यं भजन्ते इति लोचनमिव सरोजमित्युपमावसायः। **तयोरङ्गाङ्गिभाव इति**। अतिशयोक्त्यपेक्षितस्याभेदाध्यवसायनिमित्तस्य साम्यस्य शब्दद्वारेण सम्पादनाच्छ्लेषस्यानुग्राहकत्वम्। **वाक्येत्यादि**। 'इवेन विभक्त्यलोपः—' (वा० २. २. १८) इत्यादिवचनमनपेक्ष्यैवं तदुक्तम्। अन्यथा सरोजलोचनमितिवदङ्गुलीभिरिवेत्युपमाया अपि समासोक्तत्वमेव स्यात्। **श्लेषानुगृहीतेति**। रजनीमुखमित्यत्र दर्शिता। **उत्प्रेक्षाया इत्यादि**। गम्यमानसंसर्गक्रियानिमित्ताया अभिधीयमानसरोजमुकुलीकारादिनिमित्ताया वा क्रियास्वरूपोत्प्रेक्षायाः।

---

१ 'श्रितत्व', २. 'ततश्च मि', ३. 'ण यथा—अ', ४. 'योर', ५ 'वचा' क. ख. पाठः. ६. 'लोम्य भ', ७. 'वै' ग पाठः.

अनुग्राहिकाः। तद्बलेन तस्याः समुत्थानात्। सापि समुत्थापिता समुत्थापकानां चमत्कारकारितानिबन्धनमित्यङ्गाङ्गिभावः। यथा वा—

"त्रयीमयोऽपि प्रथितो जगत्सु
यद् वारुणीं प्रत्यगमद् विवस्वान्।
मन्येऽस्तशैलात् पतितोऽत
एव विवेश शुध्यै बडवाग्निमध्यम्॥"

अत्र प्रथमेऽर्धे विरोधप्रतिभोत्पत्तिहेतुः श्लेषः। दर्शनान्तरे तु विरोधश्लेषौ द्वावलङ्कारौ। तदनुगृहीतौ च द्वितीयेऽर्धे मन्येपदप्रकाशिता द्वितय्युत्प्रेक्षा। अतश्चात्राङ्गाङ्गिभावः। तथाहि—अत्र यत् कारणमुत्प्रेक्ष्यते, तत्र विरोधश्लेषानुप्रवेशः, यच्चात्र कार्यमुत्प्रेक्षानिमित्तं, तत्र पतितत्वाग्निप्रवेशौ वस्तुस्थित्यान्यथास्थितावप्यन्यथाभूताभ्यां ताभ्यामभेदेनाध्यवसितौ ज्ञेयौ। तेनात्राङ्गाङ्गिभावसङ्करः। न च विरोधप्रतिभोत्पत्तिहेतौ

---

तद्बलेन उपमातिशयोक्तिबलेन। सापीत्यादिना नियमेन कस्यचिदङ्गत्वे कस्यचिदङ्गित्वे चाङ्गिनैवालङ्कारव्यपदेशः स्यात्, न तु सङ्कर इत्युभयोरपि परस्परं प्रत्यङ्गभावश्चाङ्गिभावश्चेतरेतराश्रयपरिहाराय विषयभेदेनावगन्तव्य इत्याह। तत्रोत्प्रेक्षायाः प्रत्युत्थानेऽङ्गमुपमादिः। उपमादेश्चमत्कारकारित्वे उत्प्रेक्षाङ्गम्। श्लेषलक्षणावसरे तद्बलाबलनिरूपणायोक्तमेवार्थमिदानीं सङ्करप्रदर्शनाय संक्षिप्याह—त्रयीमयोऽपीत्यादि। एतच्च तत्रैव वितत्य व्याख्यातम्। द्वितयीति। हेतुफलोत्प्रेक्षाभेदात्। अतश्च अनुगृहीतत्वादेव। तथाहीत्यादिनोत्प्रेक्षायाः श्लेषेण श्लेषविरोधाभ्यां चाङ्गाङ्गिभावं प्रतिपाद्य तस्या एवातिशयोक्त्युत्थापकेन श्लेषेण सह तं प्रतिपादयति—यच्चात्रेत्यादिना। अङ्गाङ्गिभावसङ्कर इति। पूर्ववद् विरोधश्लेषयोः श्लेषातिशयोक्त्योश्चो-

१. 'क्षे'. २. 'ता द्वि', ३ 'श्चात्रा ग. पाठः. ४. 'भ्यामभे' क. ग पाठः. ५. 'चा त्र' ग. पाठ.. ६. 'न चात्र' ख. ग. पाठः.

श्लेषे श्लेषस्य विरोधेन सहाङ्गाङ्गिभाव[1]सङ्करः, उत्प्रेक्षाया वा निमित्तगतातिशयोक्त्या सहा[2]ङ्गाङ्गिसङ्करः । ताभ्यां विना तयोरनुत्थानात् । अतश्च निरवकाशत्वाद् बाधकत्वम् । न च मन्तव्यं विरोधमन्तरेणापि श्लेषो दृश्यत इति श्लेषस्य सावकाशत्वमिति । यतो न ब्रूमो विरोधमन्तरेणा[3]पि श्लेषो न भवतीति । किं तर्ह्यलङ्कारान्तराविविक्तो न श्लेषस्य विषयोऽस्तीति निरवकाशत्वात् तेषां बाधः[4] । तन्मध्ये च विरोधोऽनुप्रविष्ट इति सोऽपि तेन बाध्यत इति न कश्चिद् दोषः[5] । अत एवमर्थालङ्कारसङ्कर उदाहृतः । शब्दालङ्कारसङ्करस्तु कैश्चिदुदाहृतो यथा —

"राजति तटीयमभिहतदानवरासातिपातिसारावनदा ।
गजता च यूथमविरतदानवरा सातिपाति सारा वनदा ॥"

अत्र यमकानुलोमप्रतिलोमयोः शब्दालङ्कारयोः परस्परा-

---

त्प्रेक्षाया उत्थानेऽङ्गत्वं तस्याश्च तेषां चमत्कारकारित्वेऽङ्गत्वं ज्ञेयम् । श्लेषोत्प्रेक्षयोरिवोत्प्रेक्षाविषयभूतकारणगतयोर्विरोधश्लेषयोरुत्प्रेक्षानिमित्तकार्यगतयोः श्लेषातिशयोक्त्योर्वा सङ्करो नाशङ्कनीय इत्याह—न च विरोधेत्यादिना । **उत्प्रेक्षाया वेत्यादि** । अत्रापि श्लेषस्येत्यस्यानुषङ्गः । **ताभ्यामिति** । एकत्वेऽपि श्लेषस्य विषयभेदेन भेदाद् द्विवचनान्तेन तच्छब्देन परामर्शः । तयोर्विरोधातिशयोक्त्योः । **अतश्चेत्यादि** । अलङ्कारान्तरोत्थापकत्वेन तद्विविक्तविषयत्वाभावात् । कैश्चित् काव्यप्रकाशकारादिभिः । **राजति तटीत्यादि** । इयं तटी अभिहतैर्दानवानां रासं शब्दम् अतिपतितुं शीलवद्भिः सारावैर्नदैर्युक्ता अविरतेन दानेन मदेन वरा श्रेष्ठा सारा उत्कृष्टा वनदा वनखण्डनी सा गजता च यूथमतिपाति अतिशयेन रक्षति । **अत्रेत्यादि** । यद्यपि शब्दालङ्कारमध्ये अनुलोमप्रतिलोमं न लक्षितं, तथापि

---

१ 'वः स' ग, 'वेन म' क पाठ. २. 'हायं म' क ख. पाठः. ३. 'ण श्ले' ग पाठः. ४. 'धकः । त', ५ 'प । ए' क. ख. पाठः. ६. 'ति । अ' ख. ग. पाठः.

पेक्षित्वेनाङ्गाङ्गिभावसङ्कर इति । एतत् तु न सम्यगाव-
र्जकम् । शब्दालङ्कारयोः शब्दवदुपकार्योपकारकत्वाभावे-
नाङ्गाङ्गिभावाभावात् । शब्दालङ्कारसंसृष्टिस्त्वत्र श्रेयसी ।
यथोदाहृतं प्राक् । यद्वा, अत्र शब्दालङ्कारद्वयमेकवाच-
कानुप्रविष्टमिति तृतीयः सङ्करो ज्ञेयः । एवमेकः प्रकारश्च-
र्चितः । द्वितीयप्रकारस्तु सन्देहसङ्कराख्यः, यत्रोभयोरेक-
तरस्य साधकं प्रमाणं नास्ति बाधकं वा, तत्र न्यायप्राप्तः सं-
शय इति सन्देहसङ्कराख्यालङ्कारः । यथा —

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥"

अत्र विभावनाविशेषोक्त्योः सङ्करः । तथाहि — उत्क-
ण्ठाकारणाभावेऽप्युत्कण्ठाया उत्पत्तौ विभावना । स च का-
रणाभावो यः कौमारहर इत्यादिना कारणविरुद्धमुखेन प्रति-
पादितः । तथा यः कौमारहर इत्यादावनुत्कण्ठाकारणसद्भावे-
ऽप्यनुत्कण्ठाया अनुत्पत्तौ विशेषोक्तिः । सा चानुत्पत्तिः

खड्गाद्याकृतिहेतुत्वस्य दुष्करवैचित्र्योपलक्षणपरत्वाच्चित्रेऽन्तर्भावः । शा-
ब्दवदिति । यथा शब्दाावर्थं प्रति गुणीभूतत्वादन्योन्यमुपकार्योपकारक-
भावं नानुभवतस्तद्वदित्यर्थः । प्रागिति । कुसुमसौरभेत्यादौ । एकः प्रकारः
अङ्गाङ्गिभावलक्षणः । यः कौमारेत्यादि । विशेषोक्तौ प्रसङ्गोत्कर्ष-

१. 'च ग' ग पाठ　२ पूर्वम् । यं',　३. 'तत्र' क. ख पाठ　४. 'त्रय' मूलपाठः.　५ 'आनुमानप्रमाणं सा'.　६. 'या प्रमाण न विद्यते तु',　७. 'नोऽस्ति',　८. 'भाव । वे',　९. 'सन्देह. । न' ख. ग. पाठः.　१०. 'तथा च' ग. पाठः.　११. 'त. । वी' क. ख. पाठः.　१२ 'दनु' ग. पाठः.　१३. 'पद-नमी' क. पाठः.

समुत्कण्ठत इति विरुद्धोत्पत्तिमुखेनोक्ता। अत एव द्वयोरस्फुटत्वमन्यत्रोक्तम्। न चानयोः प्रत्येकं साधकबाधकप्रमाणयोग इति सन्देहसङ्करोऽयम्। यथा च[1] —

"यद्वक्त्रचन्द्रे नवयौवनेन श्मश्रुच्छलेनोल्लिखितश्चकास्ति।
उद्दा[2]मरामाहृढमानमुद्राविद्रावणो मन्त्र इव स्मरस्य॥"

अत्र वक्त्रं चन्द्र इवेति किमुपमा, उत वक्त्रमेव चन्द्र इति रूपकमिति संशयः। समासस्योभयथापि भावात्। 'उपमितं व्याघ्रादिभिः—' (२. १. ५६) इति ह्युपमासमासः[3], व्याघ्रादीनामाकृतिगणत्वात्। मयूरव्यंसकादित्वाद् रूपकसमासः[4], मयूरव्यंसकादीनामाकृतिगणत्वात्। नात्र[5] क्वचित् साधकबाधकप्रमाणसद्भाव इति सन्देहसङ्करः। यत्र तु कस्यचित् परिग्रहे साधकं बाधकं वा प्रमाणं विद्यते, तत्र नियतपरिग्रहः। तत्रानुकूल्यं साधकत्वं प्रातिकूल्यं बाधकत्वम्। तत्र साधकत्वं यथा —

"प्रसरद्बिन्दुनादाय शुद्धामृतमयात्मने।
नमोऽनन्तप्रकाशाय शङ्करक्षीरसिन्धवे॥"

अत्र शङ्कर एव क्षीरसिन्धुरिति रूपकस्य साधकं शुद्धामृतमयात्मकत्वम्। तस्य[6] शङ्करापेक्षया क्षीरसिन्धावनुकूल-

---

वार्थस्येहावसरप्राप्तत्वात् पुनर्वचनम्। आकृतिगणत्वादित्यनेन उभयत्राप्यादिशब्दस्य प्रकारवाचित्वादपठितत्वेन समासाभावो नाशङ्कनीय इत्याह— **नात्रेति**। पादाम्बुजमित्यत्र मञ्जीरशिञ्जितयोगवत् श्मश्रुसम्बन्ध उपमासाधक इति नाशङ्कनीयम्। तदपह्नुत्यार्थान्तरस्य विधानात्।

१. 'वा', २. 'श्चद्दग', ३. 'सः, म', ४. 'सः, व्याघ्रम' क. ख. पाठः. ५. 'न चात्र' ग. पाठः. ६ 'णमस्ति, त' क. ख. पाठः. ७. 'त्र' ग. पाठः.

त्वात् । उपमायास्तु न बाधकं, शङ्करेऽप्युपचरितस्य तस्य सद्भावात् । यथा वा —

"एतान्यवन्तीश्वरपारिजातजातानि ताराधिप[2]पाण्डराणि ।
संप्रत्यहं पश्यत दिग्वधूनां यशःप्रसूनान्यवतंसयामि ॥"

अत्रावतंसनं प्रसूनेष्वनुगुणमिति रूपकपरिग्रहे साधकं प्रमाणम् । बाधकं यथा —

"शरदीव प्रसर्पन्त्यां तस्य कोदण्डटङ्कृतौ ।
विनिद्रजृम्भितहरिर्विन्ध्योदधिरजायत ॥"

अत्र विन्ध्य उदधिरिवेत्युपमापरिग्रहे विनिद्रजृम्भितहरिरिति साधारणं विशेषणं बाधकं प्रमाणम् । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (२. १. ५६) इति वचनादुपमासमासे प्रतिकूलत्वात् । अतश्च पारिशेष्याद् रूपकपरिग्रहः । नहि[3] शरदीवेत्युपमात्रोपमासाधकत्वेन विज्ञेया । न ह्यौपम्येन[4]

रूपकपरिग्रह इति । दिश एव वध्व इत्याद्येवंरूपे । वध्व इव दिश इत्याद्युपमायास्तु न बाधकं, शोभावहत्वादिमात्रोपचारेण दिग्यशःसम्बन्धेऽप्यनुपपत्तिविरहात् । शारदीवेत्यादि । हरिः सिंहः पुरुषोत्तमश्च । नन्वङ्गुलीभिरिवेत्युपमा सरोजलोचनमित्यत्रोपमासाधिकेत्युक्तं प्राक्, तद्वदिहापि शरदीवेत्युपमोपमासाधिका भवत्वित्याशङ्क्याह — न हीति । तत्र बाधकाभावादुपमायाः साधकत्वाङ्गीकरणम्, इह तु प्रबलस्य सामान्यप्रयोगात्मनो बाधकस्य सद्भावात् तदनाश्रयणमिति भावः । यदि चोपक्रान्तोपमाभिर्वाह कश्चिदर्थलाभः विपर्यये वा दृष्टरूपोऽदृष्टरूपो वा प्रत्यवायः न्यायविरोधो वा, तदानीमाश्रयणीयैवोपमा । न चैतत् सर्वमिति प्रौढवादेन सोल्लुण्ठमाह — न ह्यौपम्येनेत्यादिना । किञ्च, उपमापरित्यागेन रूप-

1. 'क्रम' क. ग. पाठः २ 'पतिना', ३. 'तु', ४ 'हि चाचेन प्रधान-त्वेनेदिः ।' ग. पाठः ५ 'च', ६ 'दिन.' ख. ग. पाठः.

नुभापितमप्रयोजकं, तुल्यजातीययोरप्यलङ्कारयोरेकवाचकानुप्रवेशसंभवात्[1]। शब्दार्थवृत्त्यलङ्कारस्तु भट्टोद्भटेन[2] प्रकाशितः संसृष्टावन्तर्भावित इति त्रिप्रकार[3] एव सङ्कर इहोक्तः॥

इदानीमुपसंहारसूत्रम्—

**एवमेते शब्दार्थोभयालङ्काराः संक्षेपतः सूत्रिताः॥८६॥**

एवमिति पूर्वोक्तप्रकारपरामर्शः। एत इति प्रक्रान्त-

---

शब्दालङ्कारयोश्च पृथक् पृथगेकवाचकानुप्रवेशदर्शनात् काव्यप्रकाशकारादिभिर्विजातीययोः शब्दार्थालङ्कारयोस्तृतीयसङ्करस्य वचनमप्रयोजकम्। स**म्भवादि**ति। सम्भवश्चोदाहरणप्रदर्शनेन दर्शित एव। अनुदाहृतोऽपि शब्दार्थालङ्कारयोरयं सङ्करो ग्रन्थकृतोऽभिमत एव, तुल्यजातीययोरपीत्यपिशब्दप्रयोगात्। अनन्वयेन सहास्य सङ्कर इत्युक्तेश्च। स यथा—

न तुलितकुलशैला बाहवः सिन्धुरा वा
न च हसितसमीराः सप्तयः सायका वा।
कृतरुपि यदुनाथ! त्वय्यनीके नृपाणां
परमजनि परेषां जैत्रमस्त्रं प्रणामः॥

अत्र प्रणामस्य प्रस्तुतयुद्धोपयोगिसमानाधिकरणजैत्रास्त्रलक्षणारोप्यमाणत्वेन परिणतत्वादुत्थितेन परिणामेनानुगृहीताया अप्रश्नपूर्विकायाः शब्दोपात्तबाह्वादिवर्जनीयायाः परिसङ्ख्यायाः परमजनि परेषामित्येकधा समुदायसादृश्यलक्षणेन वृत्त्यनुप्रासेन सहैकरूपे पदसमुदायेऽनुप्रवेशः। सूक्ष्मेक्षिकायां तु पुनरस्य सत्पुष्करेत्येतदप्युदाहरणम्। **भट्टोद्भटेने**ति।

"शब्दार्थवृत्त्यलङ्कारा वाक्य एकत्र भाविनः।
सङ्करो वा"

इत्येकवाक्ये भिन्नदेशावस्थितत्वेन लक्षितः। संसृष्टौ उभयसंसृष्टिलक्षणायाम्। त्रिप्रकार एव, न तूद्भटवच्चतुष्प्रकारः॥

---

१. 'र्थालङ्कारसङ्कर', २. 'टप्र' ग. पाठः. ३. 'रः स', ४. 'क्तप' क. ख. पाठः. ५. 'त्याद्युक्ते' ख. ग पाठः.

स्वरूपनिर्देशः । सूत्रिता इति । अलङ्कारसूत्रैः सूचिताः संक्षेपेण प्रतिपादिताः । तत्र शब्दालङ्कारा यमकादयः । अर्थालङ्कारा उपमादयः । उभयालङ्कारा लाटानुप्रासादयः । संसृष्टिसङ्करप्रकारौ कौचिदलङ्कारौ । तद्रूपत्वात् । लोकवदाश्रयाश्रयि-

सूत्रिता इत्यस्य व्याख्या अलङ्कारसूत्रैः सूचिता इति । सूचिता इत्येतदपि लोकप्रसिद्ध्या सूत्रितशब्दार्थत्वेनोक्तम् । स्वकण्ठेनानुक्तिशङ्कानिरासाय सूत्रस्थस्य सङ्क्षेपत इति पदस्यान्वयप्रदर्शनमुखेन व्याचष्टे— सङ्क्षेपेण प्रतिपादिता इति । पुनरुक्तवदाभासादौ तत्तद्भेदाप्रदर्शनात् । यमकादय इत्यादि । सर्वत्रादिशब्दः प्रकारवाची । व्यवस्थावाचित्वे हि छेकानुप्रासवृत्त्यनुप्रासयोः शब्दालङ्कारत्वं पुनरुक्तवदाभासस्यार्थालङ्कारत्वं च न स्यात् । स्या(च्च वि ? च्चापि) चित्रस्योभयालङ्कारत्वम् । लाटानुप्रासादय इतिवच्छेकानुप्रासादय इत्यवचनमादिशब्दस्य व्यवस्थावाचित्वबुद्ध्या प्रदेशान्तरलक्षितस्य शब्दश्लेषादेः शब्दालङ्कारस्याग्रहणशङ्का मा भूदिति । अन्ये तु यमकस्य शब्दाश्रयत्वं स्फुटतरम् । अनुप्रासो हि रसादिलक्षणार्थानुगुण्यमप्यपेक्षते । इह तु न कथञ्चिदप्यर्थापेक्षेति यमकादय इत्युक्तमित्याहुः । एवमुपमादय इत्यपि वचनम् अर्थाश्रयत्वस्य स्फुटत्वाद् विप्रतिपत्तिनिरासाय । लाटानुप्रासादय इत्यत्रादिशब्देन क्लिष्टपरम्परितादयो गृह्यन्ते । तेषां च शब्दस्यार्थस्य च वैचित्र्यमुत्कटतया प्रतिभासत इति वस्तुस्थितिमनपेक्ष्य शब्दालङ्कारमध्येऽर्थालङ्कारमध्ये च लक्षणं विहितम् । केचित्तु आदिशब्देन शब्दालङ्कारमर्थालङ्कारं चाश्रितयोः संसृष्टिसङ्करप्रकारयोर्ग्रहणमित्याहुः । कौचिदिति । अवान्तरभेदपरिहाणेन सामान्यरूपेण शब्दार्थोभयवृत्तित्वेन निर्देष्टुमशक्यौ । अथवा कौचिदलङ्कारविषयौ, न ध्वनिगुणीभूतव्यङ्ग्यविषयौ । तद्रूपत्वादिति । पृथगलङ्कारवदलङ्कारसंयोगेऽपि शोभाविशेषोत्पत्तेः । एवं शब्दालङ्कारादिव्यवस्था आश्रयाश्रयिभावस्यैव प्रयोजकत्वे सिध्यति, न त्वन्वयव्यतिरेकयोरिति स एवाश्रयणीय इत्याह— लोकवदित्यादि । श्रौतोपमादेरित्यादिशब्देन

१ 'यः । अ', २. 'अ. उभयालङ्कारा । स', ३. 'इरौ', ४. 'उभयाल' क. पाठः ५. 'स्थित' ख. ग. पाठ. ६ 'इ न त्रु क' क पाठः. ७. 'न च वा' ख. पाठः .

भावश्च तदलङ्कारत्वेनिबन्धनम्। अन्वयव्यतिरेकौ तु तत्कार्यत्वे प्रयोजकौ, न तदलङ्कारत्वे। तदलङ्कारत्वप्रयोजकत्वे तु श्रौतोपमादेरपि शब्दालङ्कारत्वप्रसङ्गात्। तस्मादाश्रयाश्रयिभावेन चिरन्तनमतानुसृतिः।

इति मङ्खुको वितेने काश्मीरक्षितिपसान्धिविग्रहिकः।
सुकविमुखालङ्कारं तदिदमलङ्कारसर्वस्वम् ॥

समाप्तं चेदमलङ्कारसर्वस्वम्।

---

वाच्योत्प्रेक्षादेर्ग्रहणम्। तत्रैवादिशब्दान्वयव्यतिरेकानुविधानदर्शनात्। अन्वयव्यतिरेकपक्षे न परं युक्तिविरोधः, उद्भटादिपूर्वाचार्यविरोधोऽपि। तदुभयमपि स्वमते नास्तीत्याह — **तस्मादिति**। सुकविमुखालङ्कारमित्यनेन नैसर्गिकशक्तिमतामेवालङ्कारज्ञानं कवित्वे गुणातिशयमादधातीति सिद्धम् ॥

मङ्खुकनिबन्धविवृतौ विहितायामिह समुद्रबन्धेन।
गुणलेशमात्रमित्रैर्भवपीष्टादोषदर्शिभिः सद्भिः ॥

इत्यलङ्कारसर्वस्वव्याख्या सम्पूर्णा ॥

---

शुभं भूयात् ॥

१. 'व एव त', २. 'त्वे', ३. 'त्वे श्रौ', ४. 'नैव वि' क. पाठः. ५. 'सृति.। समाप्त चेदमलङ्कारसर्वस्वम्। कृती राजानकश्रीरुय्यकस्य। शिवम्। ङ' ग. पाठः

२०-पृष्ठे प्रदर्शितस्य पद्मबन्धस्याकारः




भासते प्रतिभासार! रसाभाता हताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥

२१-पृष्ठे प्रदर्शितस्य खड्गबन्धस्याकारः




भानन्दवन्दिजनगीतविचित्रभूमा
मातङ्गमन्थरगतिर्महनीयभासा ।
सारोत्तरेण वपुषा परिपन्थिहिंसा-
सातत्यसङ्ग ! यदुनाथ ! जयाङ्कजश्रीः ॥

२१-पृष्ठे प्रदर्शितस्य खड्गबन्धस्याकारः




सादितशत्रुदेहगलितरुधिरताटिनी
नीतविशुद्धकीर्त्तिजलधिभरितनमगा ।
साहसवर्जितेन यदुवर ! गुरुतरमा
सारवतीभयात ! धरणिरजनि भवता ॥

## APPENDIX II.

### अलङ्कारसूत्राणि ।

१. इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्यप्रकाराः ।
२. तत्रार्थपौनरुक्त्यं प्ररूढं दोषः ।
३. आमुखावभासनं पुनरुक्तवदाभासम् ।
४. सङ्ख्यानियमे पूर्वं छेकानुप्रासः ।
५. अन्यथा तु वृत्त्यनुप्रासः ।
६. स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम् ।
७. शब्दार्थपौनरुक्त्यं प्ररूढं दोषः ।
८. तात्पर्यभेदवत् तु लाटानुप्रासः ।
९. तदेवं पौनरुक्त्ये पञ्चालङ्काराः ।
१०. वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम् ।
११. उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा ।
१२. एकस्यैवोपमानोपमेयत्वेऽनन्वयः ।
१३. द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा ।
१४. सदृशानुभवाद् वस्त्वन्तरस्मृतिः स्मरणम् ।
१५. अभेदप्राधान्य आरोप आरोपविषयानपह्नवे रूपकम् ।
१६. आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ।
१७. विषयस्य सन्दिह्यमानत्वे सन्देहः ।
१८. सादृश्याद् वस्त्वन्तरप्रतीतिर्भ्रान्तिमान् ।
१९. एकस्यापि निमित्तवशादनेकधा ग्रहण उल्लेखः ।
२०. विषयापह्नवेऽपह्नुतिः ।
२१. अध्यवसाये व्यापारप्राधान्य उत्प्रेक्षा ।
२२. अध्यवसितप्राधान्ये त्वतिशयोक्तिः ।
२३. औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगिता ।

२४. प्रस्तुतानामप्रस्तुतानां च दीपकम् ।

२५. वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा ।

२६. तस्यापि बिम्बप्रतिबिम्बतया निर्देशे दृष्टान्तः ।

२७. सम्भवतासम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शना ।

२८. भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः ।

२९. उपमानोपमेययोरेकस्य प्राधान्यनिर्देशेऽपरस्य सहार्थसम्बन्धे सहोक्तिः ।

३०. विना किञ्चिदन्यस्य सदसत्त्वाभावो विनोक्तिः ।

३१. विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः ।

३२. विशेषणसाभिप्रायत्वं परिकरः ।

३३. विशेष्यस्यापि साम्ये द्वयोर्वोपादाने श्लेषः ।

३४. अप्रस्तुतात् सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा ।

३५. सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः ।

३६. गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम् ।

३७. स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिः ।

३८. उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेपः ।

३९. अनिष्टविध्याभासश्च ।

४०. विरुद्धाभासत्वं विरोधः ।

४१. कारणाभावे कार्यस्योत्पत्तिर्विभावना ।

४२. कारणसामग्र्ये कार्यानुत्पत्तिर्विशेषोक्तिः ।

४३. कार्यकारणयोः समकालत्वे पौर्वापर्यविपर्यये चातिशयोक्तिः ।

४४. तयोर्विभिन्नदेशत्वेऽसङ्गतिः ।

४५. विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसङ्घटना च विषमम् ।
४६. तद्विपर्ययः समम् ।
४७. स्वविपरीतफलनिष्पत्तये प्रयत्नो विचित्रम् ।
४८. आश्रयाश्रयिणोरनानुरूप्यमधिकम् ।
४९. परस्परं क्रियाजननेऽन्योन्यम् ।
५०. अनाधारमाधेयमेकमनेकगोचरमशक्यवस्त्वन्तरकरणं च विशेषः ।
५१. यथा साधितस्य तथैवान्येनान्यथाकरणं व्याघातः ।
५२. सौकर्येण कार्यविरुद्धक्रिया च ।
५३. पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला ।
५४. यथापूर्वं परस्य विशेषणतया स्थापनेऽपोहने वैकावली ।
५५. पूर्वपूर्वस्योत्तरोत्तरगुणावहत्वे मालादीपकम् ।
५६. उत्तरोत्तरमुत्कर्षः सारः ।
५७. हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम् ।
५८. साध्यसाधननिर्देशोऽनुमानम् ।
५९. उद्दिष्टानामर्थानां क्रमेणानुनिर्देशो यथासङ्ख्यम् ।
६०. एकमनेकस्मिन्ननेकमेकस्मिन् वा क्रमेण पर्यायः ।
६१. समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः ।
६२. एकस्यानेकत्र प्राप्तावेकत्र नियमनं परिसङ्ख्या ।
६३. दण्डापूपिकयार्थान्तरापतनमर्थापत्तिः ।
६४. तुल्यबलविरोधो विकल्पः ।
६५. गुणक्रियायौगपद्यं समुच्चयः ।
६६. एकस्य सिद्धिहेतुत्वेऽन्यस्य तत्करत्वं च ।
६७. कारणान्तरयोगात् कार्यस्य सुकरत्वं समाधिः ।
६८. प्रतिपक्षप्रतीकाराशक्तौ तदीयतिरस्कारः प्रत्यनीकम् ।
६९. उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम् ।
७०. वस्तुना वस्त्वन्तरनिगूहनं मीलितम् ।
७१. प्रस्तुतस्यान्येन गुणसाम्यादैकात्म्यं सामान्यम् ।
७२. स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः ।

७३. सति हेतौ तद्रूपाननुहारोऽतद्गुणः ।

७४. उत्तरात् प्रश्नोन्नयनमसकृदसम्भाव्यमुत्तरं चोत्तरम् ।

७५. संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम् ।

७६. उद्भिन्नवस्तुनिगूहनं व्याजोक्तिः ।

७७. अन्यथोक्तस्य वाक्यस्य काकुश्लेषाभ्यामन्यथायोजनं वक्रोक्तिः ।

७८. सूक्ष्मवस्तुस्वभावस्य यथावद् वर्णनं स्वभावोक्तिः ।

७९. अतीतानागतयोः प्रत्यक्षायमाणत्वं भाविकम् ।

८०. समृद्धिमद्वस्तुवर्णनमुदात्तम् ।

८१. अङ्गभूतमहापुरुषचरितवर्णनं च ।

८२. रसभावतदाभासतत्प्रशमानां निबन्धे रसवत्प्रेयऊर्जस्विसमाहितानि ।

८३. भावोदयसन्धिशबलतार्थेते पृथगलङ्काराः ।

८४. एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः ।

८५. क्षीरनीरन्यायेन तु सङ्करः ।

८६. एवमेते शब्दार्थोभयालङ्काराः संक्षेपतः सूत्रिताः ।

---

## APPENDIX III.

## श्लोकानुक्रमणिका ।

## अलङ्कारसर्वस्वे स्मृता ग्रन्थकर्तारः ।



---

## अलङ्कारसर्वस्वे स्मृता ग्रन्थाः ।



---

## अलङ्कारसर्वस्वे स्मृतानि ग्रन्थान्तरवाक्यानि ।

पृष्ठम्.

४ 'स्वसिद्धये पराक्षेपः परार्थे स्वसमर्पणम्'
१८ 'शब्दार्थयोः पुनर्वचनं पौनरुक्त्यमन्यत्रानुवादात्'
१९ 'अत्राब्जपत्त्रनयने! नयने निमील्य'
,, 'काशाः काशा इव'
२२ 'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः'
२८ 'अहो कोपेऽपि कान्तं मुखम्'
३० 'उपमैव तिरोभूतभेदा रूपकमिष्यते'
३५ 'क्वचिज्जटावल्कलावलम्बिनः कपिला दावाग्नयः'
४२ 'यस्तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः, सङ्गीतशालेति लासकैः'
,, 'वज्रपञ्जरमिति शरणागतैरसुरविवरमिति वादिकैः'(?)
४४ 'गुरुर्वचसि पृथुरुरसि विशालो मनस्यर्जुनो यशसि'
,, 'युधिष्ठिरः सत्यवचसि'
४७ 'अहं त्विन्दुम्'
५६ 'नवबिसलताकोटिकुटिलः'
,, 'ईदृक्षां क्षामतां गता'
५८ 'सर्वप्रातिपदिकेभ्यः क्विबित्येके'
,, 'केयूरायितमङ्गुलीयकैः'
५९ 'अपर इव पाकशासनः'
,, 'अपश्यन्ताविवान्योन्यम्'
६० 'अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्'
,, 'वेलेव रागसागरस्य'
८० 'अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि'

पृष्ठम्.

८० 'कुमुददलैः सह सम्प्रति विघटन्ते चक्रवाकमिथुनानि'
९७ 'केशपाशालिवृन्देन'
९९ 'नखक्षतानीव वनस्थलीनाम्'
१०४ 'अर्थभेदे शब्दभेदः'
१०६ 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव'
१०९ 'अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते ।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥'
१११ 'सादृश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः ।
अपह्नवाय सादृश्यं यत्र सैवाप्यपह्नुतिः ॥'
१२४ 'विशेषप्रतिषेधे शेषाभ्यनुज्ञानम्'
१२९ 'अनुरूपो देव्या इत्यात्मसम्भावना'
,, 'यामीति न स्नेहसदृशं मन्यते'
,, 'केवलं बाल इति, सुतरामपरित्याज्योऽस्मि । रक्षणीय इति,
भवद्भुजपञ्जरं रक्षास्थानम्'
१३० 'तदिष्टस्य निषेध्यत्वमाक्षेपोक्तेर्निबन्धनम् ।
सौकर्येणान्यकृतये न निषेधकता पुनः ॥'
१३७ 'सन्निहितबालान्धकारा भास्वन्मूर्तिश्च'
१४३ 'एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः'
१५० 'तमालनीला शरदिन्दुपाण्डु'
१६४ 'नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात् कदलीविशेषाः'
१७४ 'चित्रकर्मसु वर्णसङ्करो यतिषु दण्डग्रहणानि'
१७८ 'नमयन्तु शिरांसि धनूंषि वा, कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो
वा'
१८७ 'यत्र च प्रमदानां चक्षुरेव सहजं मुण्डमालामण्डनं भारः कुव-
लयदलदामानि'
२०१ 'तत्र यो ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकावनुकारयति,
स प्रत्यक्षः'
२०२ 'अभिमाने च सा योज्या ज्ञानधर्मे सुखादिवत्'

---

## अलङ्कारसर्वस्वव्याख्यायां स्मृतानि ग्रन्थान्तरवाक्यानि ।

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ३ | 'स्वरूपं ज्योतिरेवान्तः—' | ... | ... |
| ,, | 'अविभागा तु पश्यन्ती—' | ... | ... |
| ४ | | ... | उद्भटः |
| ,, | | .. | वामनः |
| ,, | | .. | वक्रोक्तिजीवित· |
| ,, | | .. | भट्टनायकः[कारः |
| ,, | | ... | आनन्दवर्धनः |
| ,, | | ... | व्यक्तिविवेककारः |
| ,, | | .. | मङ्खुकः |
| ५ | | .. | रुद्रट. |
| ,, | 'यस्य विकारः प्रभवन्—' | .. | ... |
| ,, | 'मासतरुणं तरुण्या—' | | ... |
| ६ | 'सादृश्याल्लक्षणा वक्रोक्तिः' | | ... |
| ,, | 'उन्मिमील कमलं सरसीनां—' | | ... |
| ,, | ... | | वामनः |
| ,, | | ... | उद्भटः |
| ,, | 'रीतिरात्मा काव्यस्य, विशिष्टा—' | .. | ... |
| ७ | | | वामनः |
| ,, | 'उभावेतावलङ्कार्यौ—' | | |
| ,, | 'शब्दार्थौ सहितौ वक्र—' | ... | .. |
| ,, | 'वाक्यस्य वक्रभावो—' | | .. |
| ८ | 'सस्मार वारणपतिः परि—' | | .. |
| ,, | 'अद्यापि मे वरतनो—' | | |
| ९ | | | वक्रोक्तिजीवित· |
| ,, | | | भट्टनायकः[कारः |
| ,, | .. | .. | उद्भटः |
| ,, | | ... | ध्वनिकारः |
| १० | .. | | ,, |
| ,, | | | उद्भटः |
| ,, | | ... | महिमा |

| पृष्ठम्. | यार्थयानि. | ग्रन्थनाम. | कर्तृनाम. |
|---|---|---|---|
| ४५ | 'परदाराणामन्धो—' | ... | ... |
| ,, | 'सङ्ग्रामधीरनृपति—' | ... | ... |
| ,, | 'प्रतिपन्नाय नृशंसः—' | ... | ... |
| ,, | 'कुवलयविकासविधिना—' | ... | ... |
| ,, | 'बालिशमविशेषज्ञो—' | ... | ... |
| ,, | 'सख्या यदुपते! सन्तो—' | ... | ... |
| ५२ | 'प्रस्थे स्थितां हिमवतोऽपि—' | ... | ... |
| ५४ | 'पद्मोल्लासकरः कुर्वन्—' | ... | उद्भटः ,, |
| ६९ | ... | ... | ... |
| ७० | 'सङ्ग्रामधीरेण—' | ... | ... |
| ,, | 'पदान्तरिक्षं परिमातुम्—' | ... | ... |
| ,, | 'सेवितुमिह यदुनाथं—' | ... | ... |
| ७१ | 'नैके पदं द्विः प्रयोज्यं प्रायेण—' | ... | उद्भटः |
| ७६ | ... | ... | ... |
| ८० | 'अमोघैरिपुभिः सार्धं—' | ... | ... |
| ,, | 'मदभरमन्थर—' | ... | ... |
| ,, | 'अधिसमरमाततज्ये—' | ... | ... |
| ८१ | 'समरगतो—' | ... | ... |
| ,, | 'शालेषु रमते—' | काव्यालङ्कारविवृ- | उद्भटः |
| ८२ | ... | कामसूत्रम्' [ति | ... |
| ८५ | ... | ... | ... |
| ८९ | 'सर्वानवद्य प्रतिजानते—' | ... | उद्भटः |
| ९५ | ... | ... | ... |
| १०१ | 'अनेकार्थस्य शब्दस्य—' | ... | ... |
| १०४ | 'क्षितिरथाप्य गुवर्णगिरिस्थितं—' | ... | ... |
| ,, | 'प्राप्ता हर्टि सुधर्मेति—' | ... | ... |
| ,, | 'अन्यायश्चानेकार्थत्वम्—' | ... | ... |
| १०५ | 'येन नाप्राप्ते यस्यारम्भः—' | | उद्भटः |
| १०६ | 'एकप्रयत्नोच्चार्याणां—' | | काव्यप्रकाशकारः |
| १०९ | ... | ... | ... |
| १११ | 'देव! त्वमेव पातालम्—' | ... | ... |
| ,, | 'ते गच्छन्ति महापदं—' | | |

| पृष्ठम् | वाक्यानि | ग्रन्थनाम | कर्तृनाम |
|---|---|---|---|
| ११५ | . | | उद्भट |
| ११७ | 'सत्यानुरक्तो नरकस्य जेता—' | | . |
| ,, | 'सेवित द्विजगणेन—' | . | .. |
| ,, | 'दक्षिणसमुद्रपारे—' | | . |
| ११९ | | | भट्टेन्दुराज |
| १२२ | 'भूमौ त एव नियसन्ति—' | | |
| ,, | 'प्रणिपतत निर्विशङ्क—' | | |
| १२६ | | | काव्यप्रकाशकार |
| ,, | 'वेशन्तास्तव मानसेन—' | | |
| ,, | 'रक्षा खलेषु भवतो—' | | |
| ,, | 'भजन्ति रिपव क्षय—' | | |
| १३७ | | | उद्भट |
| ,, | | | काव्यप्रकाशकार |
| १३९ | 'क्रियाया प्रतिषेधे—' | | उद्भट |
| १४० | . | | वामन |
| १४१ | 'दर्शितेन निमित्तेन—' | | उद्भट |
| ,, | ... | .. | काव्यप्रकाशकार |
| १४८ | 'करमाश्रमनिच्छव —' | | |
| १५१ | 'सम्पदे त्वयि सम्प्रहार—' | | |
| ,, | 'प्रतिभटगण पुरस्ते—' | | |
| १६५ | 'श्रुतमेक यदन्यत्र—' | | |
| १६७ | 'तद् द्विगुण त्रिगुण वा—' | | |
| ,, | .. | | उद्भट |
| ,, | 'मृणालहसपद्मानि—' | | |
| ,, | 'प्रणयिसुभटश्लाघ्ये—' | | |
| १७५ | 'नियम पाक्षिके सति—' | | |
| १८१ | 'तव यशसा रविवर्मन्!—' | | |
| १८४ | 'सूक्तिस्त्वद्गुणवर्णनेन—' | | |
| १८८ | 'उत्कर्षप्रतियोगिकल्पनमपि—' | | |
| १९६ | 'व्यक्तात्मीयपराभवे—' | | |
| २०४ | 'त्वयात्रोयम एव शात्रवगण —' | | |
| २०५ | 'चित्रोदात्ताद्भुतार्थत्व—' | | |

| पृष्ठम्. | वाक्यानि. | ग्रन्थनाम. | कर्तृनाम. |
| --- | --- | --- | --- |
| २०५ | 'प्रत्यक्षा इव यत्रार्थाः—' | ... | ... |
| २१० | 'अयं स रशनोत्कर्षी—' | ... | .. |
| २१७ | 'द्विपन्मृगमृगाधिपं—' | ... | ... |
| २२६ | 'न तुलितकुलशैला—' | ... | .. |
| „ | 'शब्दार्थवृत्त्यलङ्कारा—' | ... | उद्भटः |

## READY FOR SALE

| | RS | AS | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H H Svati Sri Rama Varma Mahârajah | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः (Kavya) by Syanandurapuravarnanaprabandha by H H Svati Sri Rama Varma Maharajah, with the commentary Sundari of Rajaraja Varma Koil Tampuran | 2 | 0 | 0 |

### Trivandrum Sanskrit Series

| | RS | AS | P. |
|---|---|---|---|
| No 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalilasukamuni | 1 | 0 | 0 |
| No 2—अभिनवकौस्तुभमाला दक्षिणामूर्तिस्तवौ by Krishnalilasukamuni | 0 | 2 | [illegible] |
| No 3—नलाभ्युदय (Kâvya) by Vamana Bhatta Bana (Second Edition) | 0 | 4 | 0 |
| No 4—शिवलीलार्णव (Kâvya) by Nilakantha Dikshita | 2 | 0 | 0 |
| No 5—व्यक्तिविवेक (Alankara) by Mahima Bhatta with commentary | 2 | 12 | 0 |
| No 6—दुर्घटवृत्ति (Vyakarana) by Saranadeva | 2 | 0 | 0 |
| No 7—ब्रह्मतत्त्वप्रकाशिका (Vedanta) by Sadâsivendra Sarasvati | 2 | 4 | 0 |
| No 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhupa | 1 | 0 | 0 |
| No 9—विरूपाक्षपञ्चाशिका (Vedanta) by Virûpâkshanâtha with the commentary of Vidyachakravartin | 0 | 8 | 0 |
| No 10—मातङ्गलीला (Gajalakshana) by Nilakantha | 0 | 8 | 0 |
| No 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 1 | 0 |
| No 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda | 0 | 8 | 0 |
| No 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarama. | 2 | 0 | 0 |

| | Rs | As | P |
|---|---|---|---|
| No 32—कुमारसम्भव (Kâvya) by Kâlidasa with the two commentaries, Prakasikâ of Arunagirinâtha and Vivarana of Narayana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No 33—वररुचसंग्रहः (Vyakarana) with the commentary Dipaprabha of Narayana | 0 | 8 | 0 |
| No 34—मणिदर्पण (शब्दपरिच्छेद) (Nyâya) by Raja-chûdâmanimakhin | 1 | 4 | 0 |
| No 35—मणिसार (अनुमानखण्ड) (Nyaya) by Gopinâtha | 1 | 8 | 0 |
| No 36—कुमारसम्भव (Kâvya) by Kâlidasa with the two commentaries, Prakasikâ of Arunagirinâtha and Vivarana of Narayana Pandita (Part III 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary | 0 | 1 | 0 |
| No 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatiya Sarvananda (Part I 1st kânda) | 2 | 0 | 0 |
| No 39—चारुदत्तम् (Nataka) by Bhâsa | 0 | 12 | 0 |
| No 40—अलङ्कारसूत्रम् (Alankâra) by Rajânaka Sri Ruyyaka with the Alankârasarvasva of Sri Mankhuka and its commentary by Samudrabandha (Second edition) | 2 | 8 | 0 |
| No 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Sri Sankara Bhagavat Pâda | 0 | 4 | 0 |
| No 42—प्रतिमानाटकम् (Nataka) by Bhâsa | 1 | 8 | 0 |
| No 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries Amarakoshodghâtana of Kshirasvamin and Tikasarvasva of Vandyaghatiya Sarvânanda (Part II 2nd kânda 1—6 Vargas) | 2 | 8 | 0 |

| | RS | AS | P. |
|---|---|---|---|
| No 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Sri Vedottama | 0 | 4 | 0 |
| No 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No 46—परिभाषावृत्ति (Vyâkarana) by Nilakantha Dikshita | 0 | 8 | 0 |
| No 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnananda Sarasvati (Part I) | 1 | 12 | 0 |
| No 48— Do Do (Part II) | 2 | 0 | 0 |
| No 49—गोलदीपिका (Jyotisha) by Paramesvara | 0 | 4 | 0 |
| No 50—रसार्णवसुधाकर (Alankara) by Singa Bhûpâla | 3 | 0 | 0 |
| No 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshirasvamin and Tikasarvasva of Vandyaghatiya Sarvânanda (Part III 2nd Kânda 7—10 Vargas) | 2 | 0 | 0 |
| No 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikasarvasva of Vandyaghatiya Sarvananda (Part IV 3rd Kanda) | 1 | 8 | 0 |
| No 53—शब्दनिर्णय (Vedânta) by Prakâsatmayatindra | 0 | 12 | 0 |
| No 54—स्फोटसिद्धिन्यायविचार (Vyâkarana) | 0 | 4 | 0 |
| No 55—मत्तविलासप्रहसनम् (Nataka) by Sri Mahendravikramavarman | 0 | 8 | 0 |
| No 56—मनुष्यालयचन्द्रिका (Silpa) | 0 | 8 | 0 |
| No 57—रघुवीरचरितम् (Kavya) | 1 | 4 | 0 |
| No 58—सिद्धान्तसिद्धाञ्जनम् (Vedanta) by Sri Krishnananda Sarasvatî (Part III) | 2 | 0 | 0 |
| No 59—नागानन्दम् (Nâtaka) by Sriharshadeva with the commentary Nagânandavimarsini of Sivarama | 3 | 4 | 0 |
| No 60—लघुस्तुति (Stuti) by Sri Laghubhattâraka with the commentary of Sri Râghavânanda | 0 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânanda Sarasvati (Part IV). | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kâvya) by Bharavi with the commentary Sabdârthadîpika of Chitrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kâvya) by Kâlidasa with the commentary Pradipa of Dakshinâvartanatha. | 1 | 0 | 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni. | 3 | 8 | 0 |
| No. 66—महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda. | 2 | 8 | 0 |
| No. 67—तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part I. 1–6 Patalas). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Sri Bhojadeva with the commentary Tâtparyadipikâ of Sri Kumara. | 2 | 0 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part I. Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः (Tantra) by Nârâyana with the commentary Vimarsini of Sankara (Part II. 7—12 Patalas). | 3 | 8 | 0 |
| No. 72—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isânasivagurudevamisra (Part II. Mantrapada). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः (Vedânta) by Sri Madhusudana Sarasvati. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 74— श्रीयाज्ञवल्क्यस्मृतिः (Dharmasâstra) with the commentary Bâlakridâ of Visvarûpâchârya. (Part I—Âchâra and Vyavahâra Adhyâyas). | 4 | 0 | 0 |
| No. 75—शिल्परत्नम् (Silpa) by Srikumâra (Part I). | 3 | 4 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः (*Part II*). | 3 | 4 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part III, Kriyapada 1—30 Patalas). | 3 | 4 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् with the commentary Anavila of Haradattacharya. | 5 | 0 | 0 |
| No. 79—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part I—1 & 2 Adhikaranas). | 8 | 0 | 0 |
| No. 80—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part II—3 to 7 Adhikaranas). | 8 | 0 | 0 |
| No. 81—श्रीयाज्ञवल्क्यस्मृतिः (Dharmasastra) with the commentary Bâlakrida of Visvarûpâchârya (Part II. Prâyaschittâdhyâya). | 3 | 12 | 0 |
| No. 82—अर्थशास्त्रम् of Kautalya with commentary by Mahamahopadhyaya T. Ganapati Sastri (Part III—8 to 15 Adhikaranas). | 8 | 0 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part IV, Kriyapada 31-64 Patalas and Yogapada) | 4 | 0 | 0 |
| No. 84—आर्यमञ्जुश्रीमूलकल्पः (Part III). | 2 | 12 | 0 |
| No. 85—विष्णुसंहिता (Tantra) | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 86— भरतचरितम् (Kâvya) of Sri Krishnakavi. | 2 | 0 | 0 |
| No 87— सङ्गीतसमयसारः (Sangita) of Sangitákara Sri Pârsvadeva. | 1 | 12 | 0 |
| No. 88— काव्यप्रकाशः (Aalankâra) of Mammatabhatta with two commentaries the Sampradayaprakasini of Sri Vidyachakravartin and the Sâhityachûdâmani of Sri Bhattagopâla (Part I. 1–5 Ullâsas) | 5 | 0 | 0 |

*Apply to:—*

*The Curator,*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*